M-2906

| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| श्रावणमासमहात्म्य | — | दर्शन | पूर्ण | – | 3/12 | 32 | संस्कृत | कागद | 11 | 35 | | |

पतनेहेतुः केनहतः स्मरः ॥ किंवर्ण्येभागधेयंतेयद्भक्तुंहीदृशोभवान् ॥ ४४ ॥ त्वांस्तोतुंजन्मकोट्याऽपिवराकोहंनचक्षमः ॥ कृत्वा
मयिकृपामेवमत्प्रश्नान्वक्तुमर्हसि ॥ ४५ ॥ ॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येसनत्कुमारप्र
श्नोनामप्रथमोऽध्यायः ॥ १ ॥ ॥ ईश्वरउवाच ॥ ॥ साधुसाधुमहाभागविनीतोऽसिविधिरिंचिज ॥ श्रोतागुणयुतोयस्मात्त्वद्वै
लुर्भक्तिभूषितः ॥ १ ॥ श्रावणेमासिविषयेयत्पृष्टंभवतानघ ॥ अप्रष्टम पितंवक्ष्येप्रेम्णापरमयामुदा ॥ २ ॥ प्रियोभवतिचाऽहे द्यो
नम्रत्वेनतथाविधः ॥ पंचमोमस्तकश्छिन्नः प्रोद्धतस्यपितुस्तव ॥ ३ ॥ त्वंचतंमत्सरंत्यक्त्वामांयतः शरणंगतः ॥ अतोवक्ष्यामितेतात
भूत्वाचैकमनाः शृणु ॥ ४ ॥ कुर्यान्नक्तव्रतंयोगिन्श्रावणेनियतोनरः ॥ रुद्राभिषेकंकुर्वीतमासमात्रंदिनेदिने ॥ ५ ॥ स्वप्रीतिविनि
षयस्याऽपिकस्यचित्त्यागमाचरेत् ॥ पुष्पैः फलैश्चधान्यैश्चतुलसीमंजरीदलैः ॥ ६ ॥ बिल्वपत्रैर्लक्षपूजांशंकरस्यसमाचरेत् ॥ कोटि
लिंगादिकर्तव्यंब्राह्मणांश्चैवभोजयेत् ॥ ७ ॥ धारणापारणेकुर्यादुपोषणमथापिवा ॥ पंचामृताभिषेकंचममप्रीतिकरंपरं ॥ ८ ॥ अस्मि
न्मासेकृतंयद्यत्तदानंत्यायकल्पते ॥ भूमिशायीब्रह्मचारीयतवाक्चभवेन्मुने ॥ ९ ॥ ननयेन्मासमेनंतुव्रतवंध्यंकदाचन ॥ अनोद
नंसमश्नीयात्हविष्यान्नमथाऽपिवा ॥ १० ॥ पत्रेचैवसमश्नीयाच्छाकमात्रंत्यजेनवा ॥ किंचिदुर्तसर्वथास्यान्नभक्तिमान्मुनिस
त्तम ॥ ११ ॥ सदाचारोभूमिशायीप्रातःस्नायीजितेंद्रियः ॥ मत्पूजांप्रत्यहंकुर्यादेकाग्रकृतमानसः ॥ १२ ॥ पुरश्चरणमप्यत्रमंत्रा-

श्रा॰मा णांसिद्धिदंपरम् ॥ शिवषड्वर्णमंत्रस्य गायत्र्याश्चजपंचरेत् ॥ १३ ॥ प्रदक्षिणानमस्कारान्वेदपारायणंतथा ॥ जपः पुरुषसूक्त-
२ स्यअधिकंफलदोभवेत् ॥ १४ ॥ ग्रहयज्ञः कोटिहोमोलक्षहोमोऽयुतस्तथा ॥ कृतः फलानिसद्योऽत्रवांछितार्थफलप्रदः ॥ १५ ॥ अ- अ॰
स्मिन्मासेचैकदिनंयोवंध्यंव्रततोनयेत् ॥ सयातिनरकंघोरंयावदाभूतसंप्लवम् ॥ १६ ॥ यथायंमेप्रियोमासस्तथाकिंचिन्नमेप्रियं २
॥ काम्यश्चफलदश्चायंनिष्कामस्यतुमोक्षदः ॥ १७ ॥ तत्रव्रतानियेधर्मास्तान्मत्तः शृणुसत्तम ॥ रवौरविव्रतंसोमेमत्पूजानक्तभोजन
म् ॥ १८ ॥ प्रथमंसोममारभ्यव्रतंस्याद्रोटकाभिधम् ॥ सार्द्धमासत्रयंतत्स्यात्सर्वकामार्थसिद्धिदम् ॥ १९ ॥ भौमेमंगलगौर्याश्चव्रतद-
न्हौर्बुधजीवयोः ॥ शुक्रेजीवंतिकायाश्चआंजनेयनृसिंहयोः ॥ २० ॥ शनौव्रतंसमादिष्टंतिथिष्वथमुनेशृणु ॥ नभः शुक्लद्विती-
यायांव्रतमौदुंबराभिधम् ॥ २१ ॥ गौरीव्रतंतृतीयायांश्रावणेशुक्लपक्षके ॥ तथाशुक्लचतुर्थ्यांतुदूर्वागणपतिव्रतम् ॥ २२ ॥ विनायकी
तितस्याश्चसंज्ञास्यादपरामुने ॥ नागानांपूजनेशस्तापंचमीशुक्लपक्षके ॥ २३ ॥ इमारौरवकल्यादिंजानीहिमुनिसत्तम ॥ सूपोदनव्र
तंषष्ठ्यांसप्तम्यांशीतलाव्रतम् ॥ २४ ॥ पवित्रारोपणंदेव्यावसौभूतेऽथवाभवेत् ॥ शुक्लकृष्णानवम्योस्तुनक्तव्रतविशेषतः ॥ २५ ॥
दशम्यांशुक्लपक्षेतुआशासंज्ञंव्रतंभवेत् ॥ पक्षद्वयेविशेषोऽस्मिन्नेकादश्योस्तुकश्चन ॥ २६ ॥ पवित्रारोपणंशुक्लद्वादश्यांतुह-
रेः स्मृतम् ॥ द्वादश्यांश्रीधरंपूज्यपरांगतिमवाप्नुयात् ॥ २७ ॥ उत्सर्जनमुपाकर्मसभादीपस्तथैवच ॥ उपाकर्मसभायांतुरक्षाबं- ३

धस्ततः परम् ॥२८॥ श्रवणाकर्मतत्रैवतथासर्पबलिः स्मृतः ॥ हयग्रीवस्यावतारः पूर्णिमायांतुसप्तकम् ॥२९॥ नभः कृष्णेतु
संकष्टचतुर्थीव्रतमुच्यते ॥ ज्ञेयामानवकल्यादिः श्रावणेकृष्णपंचमी ॥३०॥ पूर्णावतारः कृष्णस्य कृष्णाष्टम्यांद्विजोत्तम ॥ अव-
तारः समभवत्तत्रमहोत्सवम् ॥३१॥ इयंमन्वादिरपिचज्ञातव्यामुनिपुंगव ॥ अमायांश्रावणेमासिपिठोराव्रतमुच्यते ॥३२॥ कु
शानांग्रहणंचैववृषभाणांचपूजनम् ॥ शुक्लाद्यतिथिमारभ्यतत्तत्तिथिषुदेवताः ॥३३॥ वन्हिर्देवः प्रतिपदिद्वितीयाब्रह्मदेवता ॥
तृतीयायास्तथागौरीचतुर्थ्यांगणनायकः ॥३४॥ सर्पाधिपापंचमीस्यात्षष्ठीस्यात्स्कंददेवता ॥ सप्तम्यांभास्करोदेवः शिवदेवाष्टमी
तिथिः ॥३५॥ दुर्गाधिपातुनवमीदशम्यंतकदेवता ॥ एकादश्यधिपाश्चैवविश्वेदेवाः प्रकीर्तिताः ॥३६॥ द्वादश्यांश्चहरिः कामस्त्र
योदश्यधिपोमतः ॥ चतुर्दश्याः शिवश्चैवपौर्णमास्याः शशीपतिः ॥३७॥ अमायांपितरोदेवाएतेतिथ्यधिपाः स्मृताः ॥ सदेवस्तत्रपू
ज्यः स्याद्यस्यदेवस्ययातिथिः ॥३८॥ अगस्त्यस्योदयोमासे प्रायेणाश्चैवजायते ॥ कथयामिचतंकालंशृणुष्वैकमनामुने ॥३९॥ सिं
हसंक्रांतिदिवसाद्यदाद्वादशयांतिच ॥ चत्वारिंशच्चघटिकातदागस्त्योदयोभवेत् ॥४०॥ सप्ताहानिततः पूर्वमगस्त्यार्घ्यंसमाचरेत्
द्वादशस्वपिमासेषुआदित्योभिन्नसंज्ञया ॥४१॥ तपतेश्रावणेतत्रगभस्तिरितिसंज्ञितः ॥ तत्पूजनंचकर्तव्यंमासेस्मिन्सात्विकैर्नरैः
४२॥ चतुर्षुयानिमासेषुवर्ज्यानिशृणुसत्तम ॥ श्रावणेवर्जयेच्छाकंदधिभाद्रपदेतथा ॥४३॥ दुग्धमाश्वयुजेमासिकार्तिकेद्विदलंत्यजेत्

इत्यादीनिसमस्तानितत्रकर्तुमशक्नुवन् ॥ ४४॥ एकस्मिञ्छ्रावणेमासं कुर्वंस्तत्फलभाग्भवेत् ॥ उद्देशोयंमयाप्रोक्तः संक्षेपात्तवमान
द ॥ ४५॥ तत्रत्यानांव्रतानांतुधर्माणांमुनिसत्तम ॥ केनापिविस्तरोवक्तुंनालंवर्षशतैरपि ॥ ४६॥ ममप्रीत्यैहरेर्वापिकुर्यान्नूममशोधनः
॥ आवयोर्नहिभेदोस्तिपरमार्थदशापरम् ॥ ४७॥ कल्पयंत्यत्रयेभेदंतेवैनिरयगामिनः ॥ सनत्कुमारतस्मात्त्वंश्रावणधर्ममाचर ॥ ४८
॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येश्रावणव्रतोद्देशकथनंनामद्वितीयोऽध्यायः ॥ २॥ ॥
सनत्कुमारउवाच ॥ ॥ भगवन्व्रतसंघस्यउद्देशः कथितस्त्वया ॥ तृप्तिर्नजायतेस्वामिन्विस्तराद्वक्तुमर्हसि ॥ १॥ यच्छ्रुत्वाकृ
तकृत्योऽहंभविष्यामिसुरेश्वर ॥ २॥ ॥ ईश्वरउवाच ॥ नक्तव्रतेनयोगीशश्रावणंयोनयेत्सुधीः ॥ द्वादशस्वपिमासेषुसनक्तफ
लभाग्भवेत् ॥ ३॥ दिनावसानपूर्वंतुनक्तंस्याद्रात्रिभोजनं ॥ तत्राद्यंत्रिघटीस्त्यक्त्वाकालःस्यान्नक्तभोजने ॥ ४॥ ततःसंध्यात्रिघ-
टिकाअस्तादुपरिभास्वतः ॥ चत्वारीमानिकर्माणिसंध्यायांपरिवर्जयेत् ॥ ५॥ आहारंमैथुनंनिद्रांस्वाध्यायंचचतुर्थकम् ॥ गृहस्थ
यतिभेदेननक्तव्यवस्थांचमेशृणु ॥ ६॥ आत्मनोद्विगुणीछायामंदीभवतिभास्करे ॥ यतेर्नक्तंतुतत्प्रोक्तंननक्तंनिशिभोजनम् ॥ ७॥
नक्षत्रदर्शनान्नक्तंगृहस्थस्यबुधैःस्मृतम् ॥ यतेर्दिनाष्टमेभागेरात्रौतस्यनिषिध्यते ॥ ८॥ नक्तंनिशायांकुर्वीतगृहस्थोविधिसंयु-
तः ॥ यतिश्चविधवाचैवविधुरश्चससूर्यकम् ॥ ९॥ विधुरश्चेत्सुतवान्स्यात्सतुरात्रौसमाचरेत् ॥ अनाश्रमोप्याश्रमीस्यादपत्नी-

४

कोऽपिपुत्रवान् ॥ १० ॥ एवंयथाधिकारंतुकुर्यान्नक्तव्रतंसुधीः ॥ अत्रनक्तव्रतीमासेपरांगतिमवाप्नुयात् ॥ ११ ॥ प्रातःस्नानंकरि
ष्यामिब्रह्मचर्यव्रतेस्थितः ॥ भोक्ष्यामिनक्तंभूशय्यांकरिष्येप्राणिनांदयाम् ॥ १२ ॥ प्रारब्धेस्मिन्व्रतेदेवयद्यपूर्णोम्रियेह्यहम् ॥ त
दासंपूर्णतांयातुप्रसादात्तेजगत्पते ॥ १३ ॥ इतिसंकल्प्यमेधावीमासनक्तव्रतंचरेत् ॥ एवंनक्तव्रतंकुर्वन्ममप्रियतमोभवेत् ॥ १४
विप्रद्वाराऽतिरुद्रेणमहारुद्रेणवास्वयम् ॥ अभिषेकंमासमात्रंरुद्रेणप्रत्यहंचरेत् ॥ १५ ॥ तस्यप्रीणाम्यहंवत्सजलधाराप्रियोय
तः ॥ कुर्याद्रुद्रेणवाहोमंममप्रीतिकरंपरम् ॥ १६ ॥ स्वस्ययद्रोचतेऽत्यंतंभोज्यंवाभोग्यमेववा ॥ संकल्प्यद्विजवर्यायदत्वामासेस्व
यंत्यजेत् ॥ १७ ॥ अतःपरंशृणुसुतेलक्षपूजाविधिंपरम् ॥ श्रीकामोबिल्वपत्रैश्चदूर्वाभिःशांतिकामकः ॥ १८ ॥ आयुःकामेनक
र्तव्यंचंपकैःपूजनंहरेः ॥ विद्याकामेनकर्तव्यंमल्लिकाजातिभिस्तथा ॥ १९ ॥ शिवविष्ण्वोःप्रसन्नत्वंतुलसीभिःप्रसिध्यति ॥ पुत्र
कामेनकर्तव्यंबार्हतैःपूजनंशुभम् ॥ २० ॥ दुःस्वप्नप्रशमार्थायशस्तंधान्यप्रपूजनम् ॥ रंगवल्यादिभिर्देवंदेवस्याग्रेविनिर्मितैः ॥
२१ ॥ पद्माद्दिभिःस्वस्तिकाद्यैश्चक्राद्यैःपूजयेद्विभुं ॥ एवंहिसर्वपुण्यैश्चसर्वकामार्थसिद्धये ॥ २२ ॥ लक्षपूजांप्रकुर्याच्चेत्तत्प्रसन्नोह
रोभवेत् ॥ उद्यापनंततःकार्यंमंडपंचैवसाधयेत् ॥ २३ ॥ वेदिकाचप्रकर्तव्यामंडपस्यत्रिभागतः ॥ पुण्याहवाचनंकृत्वाआचार्यंव
रयेत्ततः ॥ २५ ॥ गीतवादित्रनिर्घोषैर्ब्रह्मघोषेणभूयसा ॥ प्रविश्यमंडपेतस्मिन्रात्रौजागरणंचरेत् ॥ २६ ॥ वेदिकायांप्रकर्तव्यंलिंग

श्रा॰मा॰
५

तोभद्रमुत्तमम् ॥ तन्मध्येतंडुलैः कुर्यात्कैलासंच स्रुशोभनम् ॥ २७ ॥ कलशंस्थापयेत्तत्रताम्रंनैवमहाप्रभम् ॥ पंचपल्लवसंयु
क्तंन्यसेद्वस्त्रंसुसूक्ष्मकं ॥ २८ ॥ सौवर्णींप्रतिमांतत्रस्थापयेत्पार्वतीपतेः ॥ पूजांतत्रप्रकुर्वीतपंचामृतपुरःसरैः ॥ २९ ॥ धूपैर्दीपैःसनैवे
द्यैर्गीतवादित्रनृत्यकैः ॥ वेदशास्त्रपुराणोश्चरात्रौजागरणंचरेत् ॥ ३० ॥ ततःप्रभातसमयेस्रुस्नातःस्रुशुचिर्भवेत् ॥ स्थंडिलंका-
रयेत्तत्रस्वशाखोक्तविधानतः ॥ ३१ ॥ होमंचसतिलाज्येनपायसेनचकारयेत् ॥ मूलमंत्रेणगायत्र्याशिवनाम्नांसहस्रकैः ॥ ३२ ॥
येनमंत्रेणपूजातुकृतातेनैवहोमयेत् ॥ शर्कराघृतमिश्रेणचरुणाजुहुयात्ततः ॥ ३३ ॥ ततःस्विष्टकृतंहुत्वापूर्णाहुतिमनंतरम् ॥
आचार्यंपूजयेत्सम्यक्वस्त्रालंकारभूषणैः ॥ ३४ ॥ ब्राह्मणान्पूजयेत्सम्यक्तेभ्योदद्याच्चदक्षिणाम् ॥ येनयेनप्रकुर्याच्चलक्षपूजा
मुमापतेः ॥ ३५ ॥ तत्तद्दद्यात्सुवर्णेनकृत्वाशंभुंप्रपूजयेत् ॥ यद्दिदीपःकृतस्तेनतद्दानंचैवकारयेत् ॥ ३६ ॥ स्रुवर्णवर्तिकांकृत्वादीप
मात्रंचरौप्यकम् ॥ गोघृतेनसमायुक्तंसर्वकामार्थसिद्धये ॥ ३७ ॥ क्षमापयेत्ततोदेवंब्राह्मणान्भोजयेच्छतम् ॥ एवंयःकुरुतेपूजां
तस्यप्रीणाम्यहंमुने ॥ ३८ ॥ तत्रापिश्रावणेकुर्यात्तदानंत्यायकल्पते ॥ स्वप्रीतिविषयःकश्चित्पदार्थस्त्यज्यतेयदि ॥ ३९ ॥ मदर्पण
धियाचात्रमासितस्यफलंशृणु ॥ इहामुत्रचतत्प्राप्तिर्भवेल्लक्षगुणाधिका ॥ ४० ॥ सकामत्वेतुचैवंस्यान्निष्कामत्वेपरांगतिः ॥ रुद्राभि
षेकंकुर्वाणस्तत्रत्याक्षरसंख्यया ॥ ४१ ॥ प्रत्यक्षरंकोटिवर्षंरुद्रलोकेमहीयते ॥ पंचामृतस्याभिषेकादमृतत्वंसमश्नुते ॥ ४२ ॥ तस्मि-

अ॰
१
५

न्मासे भूमिशायी फलं तस्यापि च शृणु ॥ प्रवालनिर्मितां श्रेष्ठां गजदंतभवामपि ॥ ४३ ॥ पाटीरनिर्मितां चापि रवचितां नवरत्नकैः ॥ निः
सीममृदुपक्षींद्रविशेषां हि द्विजसत्तम ॥ ४४ ॥ वरवस्त्रेण संछन्नां तूलिकायन्त्रराजते ॥ दशोपबर्हणैर्युक्तां शय्यां स लभते शुभाम् ॥ ४५
रम्यांगनासमायुक्तां रत्नदीपविभूषिताम् ॥ ब्रह्मचर्येण चाप्यत्र वीर्यपुष्टिर्भवेद्दृढा ॥ ४६ ॥ ओजोबलं देहदार्ढ्यं यत्कूर्मस्योपकारकन्
म् ॥ प्रत्यक्षे च भवेत्तस्य ब्रह्मप्राप्तिर्न संशयः ॥ ४७ ॥ निष्कामस्य सकामस्य स्वर्गे देवांगनाः शुभाः ॥ अत्र मौनव्रतधरो महान्वक्ता प्र
जायते ॥ ४८ ॥ अहोरात्रं दिने वापि भुक्तिकालेऽथवा पुनः ॥ घंटायाः पुस्तकस्यापि व्रतांते दानमाचरेत् ॥ ४९ ॥ सर्वशास्त्रप्रवीणः
स्याद्वेदवेदांगपारगः ॥ वाचस्पतिसमो बुद्ध्या मौनमाहात्म्यतो भवेत् ॥ मौनिनः कलहो नास्ति तस्मान्मौनव्रतं परम् ॥ ५० ॥ ॥
इति श्रीस्कंदपुराणे श्रावणमासमाहात्म्ये ईश्वरसनत्कुमारसंवादे नक्तव्रतलक्षपूजाभूमिशयनमौनादिव्रतकथनं नाम तृती
योऽध्यायः ॥ ३ ॥ ॥ ईश्वर उवाच ॥ ॥ सनत्कुमार वक्ष्यामि धारणापारणाव्रतम् ॥ पुण्याहं वाचयेत्पूर्वमारभ्य प्रतिप-
द्दिनम् ॥ १ ॥ संकल्पयेन्मम प्रीत्यै धारणापारणाव्रतम् ॥ एकस्मिन्धारणं कुर्यात्पारणं च तथापरे ॥ २ ॥ उपवासो धारणे स्यात्पारणे
भोजनं भवेत् ॥ समाप्ते मासि चैवात्र कुर्यादुद्यापनं व्रती ॥ ३ ॥ समाप्ते श्रावणे मासि पुण्याहं कारयेत्पुरा ॥ आचार्यं वरयेत्पश्चात् ब्राह्म
णांश्चैव मानद ॥ ४ ॥ पार्वतीशंकरस्यापि प्रतिमां स्वर्णनिर्मिताम् ॥ पूर्णकुंभे तु संस्थाप्य पूजयेन्निशि भक्तितः ॥ ५ ॥ रात्रौ जागरणं कुर्या

 त्सुराणश्रवणादिभिः॥ प्रातरग्निंसमाधायहोमंकुर्याद्यथाविधि॥६॥ त्र्यंबकेणचमंत्रेणजुहुयाच्चतिलौदनम्॥ तथैवशिवगायत्र्या- 
 जुहुयाच्चघृतौदनम्॥७॥ षडक्षरेणमंत्रेणपायसंजुहुयात्ततः॥ पूर्णाहुतिंततोहुत्वाहोममशेषंसमापयेत्॥८॥ ब्राह्मणान्भोजयेत्स- 
श्चादाचार्यंचैवपूजयेत्॥ एवंकृत्वामहाभागब्रह्महत्यादिपातकैः॥९॥ मुच्यतेनात्रसंदेहस्तस्मात्कुर्यान्महाव्रतम्॥ शृणुमासोपवा
सस्यश्रावणेविधिमादरात्॥१०॥ संकल्पयेत्तुप्रतिपद्दिनेप्रातर्व्रतंमुने॥ नारीवापुरुषोवापिसंयतात्माजितेंद्रियः॥११॥ ततोर्चयेद
मायांतुशंकरंलोकशंकरम्॥ संपूजयेत्षोडशभिरुपचारैर्वृषध्वजम्॥१२॥ ब्राह्मणान्पूजयेच्चैववस्त्रालंकरणादिभिः॥ भोजयेच्चय
थाशक्त्याप्रणिपत्यविसर्जयेत्॥१३॥ एवंमासोपवासस्तुममप्रीतिकरोभवेत्॥ रुद्रवर्त्तिविधानंचसंमितंलक्षसंख्यया॥१४॥ शृ-
णुष्वावहितोभूत्वासर्वसिद्धिकरंनृणाम्॥ कार्पासतंतुभिःकार्याएकादशभिरादरात्॥१५॥ वर्त्तयस्तारुद्रवर्त्तीसंज्ञाःप्रीतिकराम्मम
श्रावणस्याद्यदिवसेसंकल्प्यविधिपूर्वकम्॥१६॥ देवदेवंमहादेवंलक्षवर्तिभिरादरात्॥ नीराजयाभिगौरीशंश्रावणेमासिभक्तितः
॥१७॥ पूजयित्वाप्रतिदिनंवर्तीनांतुसहस्रतः॥ नीराजयेदंत्यदिनेसहस्रान्यपयेकसप्ततिः॥१८॥ अथवाप्रत्यहंदद्यात्सहस्रत्रयमाह-
तः॥ चरमेतुदिनेदद्यात्सहस्राणित्रयोदश॥१९॥ एकस्मिन्नथवादिनेलक्षंरुद्रवर्त्त्याप्रदीपयेत्॥ सघृतेनापिबहुनास्मिप्रीतस्तामम व
ल्लभाः॥२०॥ पूजयित्वातुविश्वेशंशृणुयाच्चकथांततः॥२१॥ ॥सनत्कुमारउवाच॥ ॥देवदेवजगन्नाथजगदानंदकारक॥ 

व्रतस्याऽस्यप्रभावंमेकृपांकृत्वावदप्रभो॥केनचीर्णंव्रतमिदंविधिरुद्यापनेकथम्॥२२॥ ॥ईश्वरउवाच॥ ॥शृणुवैधात्र
यत्नेनव्रतानामुत्तमंव्रतम्॥रुद्रवर्त्यामहापुण्यंसर्वोपद्रवनाशनम्॥२३॥प्रीतिसौभाग्यजननंपुत्रपौत्रसमृद्धिदं॥शंकरप्रीतिजन
नंशिवलोकेपरंपदम्॥२४॥रुद्रवर्तिसमंनास्तित्रिषुलोकेषुसद्व्रतम्॥अत्रैवोदाहरंतीममितिहासंपुरातनम्॥२५॥क्षिप्रानद्यास्तटे
रम्येपुरीउज्जयिनीशुभा॥तस्यामासीत्सुगंधाख्यावारस्त्रीद्युतिसुंदरा॥२६॥तयाशुल्कंकृतंस्वीयेसुरतेतुसुदुःसहम्॥सुवर्णा
नांशतंलोकेप्रतिज्ञांकृतवत्यथ॥२७॥युवानश्चतयाविप्राःस्पंशितानश्चसुगंधया॥राजानोराजपुत्राश्चनग्नीकृत्यपुनःपुनः॥२८॥ते
षांभूषागृहीत्वातुधिःकृतास्तुसुगंधया॥एवंहिबहवोलोकालुंठितास्तेसुगंधया॥२९॥तस्यास्तुदेहगंधेनक्रोशमात्रंसुगंधितम्॥
रूपलावण्यकांतीनांसाप्रतिष्ठाधरातले॥३०॥षट्त्रिंशद्रागभार्याणांषड्रागाणांचगायने॥सत्त्वंसत्या अनंतायाःकुशलागानकर्मणि
॥३१॥नृत्येरंभादिकाःसर्वास्तर्जयंतीसुरांगनाः॥गत्यागजांश्चहंसांश्चविहसंतीपदेपदे॥३२॥कामबाणान्भ्रमरयंतीकटाक्षैर्भ्रूकुटेने-
रितैः॥कदाचित्सागताक्षिप्रांकौतुकाविष्टमानसा॥३३॥ददर्शासामनोरम्यामृषिभिःपरिसेविताम्॥केचित्ध्यानपराविप्राःकेचित्
जपपरायणाः॥३४॥रताःशिवार्चनेकेचिद्विष्णोःकेचित्प्रपूजने॥तेषांमध्येवसिष्ठोहितयादृष्टोमहामुने॥३५॥तस्याधर्मेभवेद्बु-
द्धिस्तद्दर्शनमहत्त्वतः॥विगताशाजीवनेपिविषयेषुविशेषतः॥३६॥विनम्रकंधराभूत्वाप्रणिपत्यपुनःपुनः॥स्वकर्मपरिहारायमे

प्रच्छमुनिपुंगवम् ॥ ३७ ॥ ॥ स्कंगंधोवाच ॥ ॥ अनाथनाथविप्रेंद्रसर्वविद्याविशारद ॥ मयाकृतानियोगीश पापानिसुबहून्यपि
तत्सर्वपापनाशायउपायंब्रूहिमेप्रभो ॥ ३८ ॥ ॥ ईश्वरउवाच ॥ ॥ एवमुक्तस्तयाविप्रोवसिष्ठोमुनिरादरात् ॥ तस्याःकर्मस-
विज्ञायसोऽब्रवीद्दीनवत्सलः ॥ ३९ ॥ ॥ वसिष्ठउवाच ॥ ॥ शृणुष्वावहिताभूत्वात्तवपापस्यसंक्षयः ॥ येनजायेतपुण्येनतत्स
र्वंकथयामिते ॥ ४० ॥ गच्छवाराणसींभद्रेत्रिषुलोकेषुविश्रुताम् ॥ गत्वाकुरुष्वतत्क्षेत्रेव्रतंत्रैलोक्यदुर्लभम् ॥ ४१ ॥ रुद्रवत्यांमहापुण्यं-
शिवप्रीतिकरंपरम् ॥ कृत्वाव्रतमिदंभद्रेप्राप्स्यसित्वंपरांगतिम् ॥ ४२ ॥ ॥ ईश्वरउवाच ॥ ॥ ततःसाकोशमादायपृत्यंचैवसमि
त्रकम् ॥ गत्वाकाशींव्रतंचक्रेवसिष्ठोक्तविधानतः ॥ ४३ ॥ ततःसासरणीतीरेतस्मिन्लिंगेलयंययौ ॥ ४४ ॥ एवंयाकुरुतेनारीव्रतमेत
त्सुदुर्लभम् ॥ यंयंचिंतयतेकामंतंतंप्राप्नोत्यसंशयः ॥ ४५ ॥ माहात्म्यंशृणुमाणिक्यवर्तीनामपिसुव्रत ॥ व्रतेनतेनासांविप्रेंद्रसद्धर्मास
नभागिनी ॥ ४६ ॥ जायतेमत्प्रियासाहियावदाभूतसंप्लवम् ॥ उद्यापनमथोवक्ष्येव्रतसंपूर्णहेतवे ॥ ४७ ॥ कलशेस्थापयेद्देवमुमयास
हितंशिवम् ॥ सुवर्णनिर्मितंदेवंवृषभेरोप्यनिर्मिते ॥ ४८ ॥ विधिनापूजनंकृत्वारात्रौजागरणंचरेत् ॥ ततःप्रभातेविमलेस्नात्वानद्यां
विधानतः ॥ ४९ ॥ आचार्यंवरयेद्भक्त्याद्विजैरेकादशैःसह ॥ होमश्चैवप्रकर्तव्योघृतपायसबिल्वकैः ॥ ५० ॥ रुद्रसूक्तेनगायत्र्यामूलमं
त्रेणवापुनः ॥ ततःपूर्णाहुतिंहुत्वाआचार्यादीन्प्रपूजयेत् ॥ ५१ ॥ तथैकादशसद्विप्रान्सपत्नीकान्सुभोजयेत् ॥ एवंयाकुरुतेनारी-

सर्वपापैःप्रमुच्यते॥५२॥कथांश्रुत्वाविधानेनस्थाप्यंसर्वंन्यवेदयेत्॥अश्वमेधसहस्रस्यफलंभवतिनिश्चितम् ५३॥ ॥इति
श्रीस्कंदपुराणेश्रावणमासमाहात्म्येईश्वरसनत्कुमारसंवादेधारणापारणामासोपवासरुद्रवर्तिकथनंनामचतुर्थोऽध्यायः॥४॥ छ
॥ईश्वरउवाच॥ ॥माहात्म्यंकोटिलिंगानांपुण्यंवक्तुंनशक्यते॥एकैकस्यापिलिंगस्यकिंपुनःकोटिसंख्यया॥१॥अशक्तोल
क्षकंकुर्यात्सहस्रमथवाशतम्॥एकस्यापिहिलिंगस्यकरणान्ममसन्निधिः॥२॥षडक्षरेणमंत्रेणपूजाकार्यास्मरद्विषः॥उपचारैः
षोडशभिर्भक्तियुक्तेनचेतसा॥३॥उद्यापनंचकर्तव्यंग्रहयज्ञपुरःसरम्॥संपादनीयोहोमश्चब्राह्मणांश्चैवभोजयेत्॥४॥नाकाल-
मरणंतस्यवंध्यत्वहरणंपरम्॥सर्वापत्तिक्षयकरंसर्वसंपत्प्रवर्द्धनं॥५॥प्रेत्यकैलासवासश्चआकल्पंममसंनिधौ॥पंचामृताभिषेकंत
यःकुर्याच्छ्रावणेनरः॥६॥सपंचामृतभोजीस्यात्संपन्नोगोधनेनच॥अत्यंतंमधुरालापोप्रियश्चत्रिपुरद्विषः॥७॥अन्नोदनव्रतीचैव
हविष्याशीचयोनरः॥व्रीह्यादिसर्वधान्यानामक्षय्योसौनिधिर्भवेत्॥८॥पत्रावल्यांतुभुंजानःस्वर्णभाजनभोजनः॥शाकवर्ज-
नतःस्याद्वैशाककर्तानरोत्तमः॥९॥केवलंभूमिशायीतुकैलासेवासमाप्नुयात्॥प्रातःस्नानान्नभोमासिअब्दंतत्फलभाङ्मतः॥१
जितेंद्रियत्वान्मासेऽस्मिन्बलमैंद्रियकंभवेत्॥स्फाटिकेश्ममयेवापिमार्त्तिकेमारकतेपिवा॥११॥स्वयंभौवास्वयंभौवापौष्पेधातुमये
पिवा॥चंदनेनवनीतेवाअन्यस्मिन्वापिलिंगके॥१२॥सकृत्पूजांप्रकुर्वाणोब्रह्महत्याशतंदहेत्॥सूर्यचंद्रोपरागेषुसिद्धिःक्षेत्रेऽपि

वाक्कचित् ॥१३॥ सिद्धिर्यालक्षजाप्येनसकृत्स्याज्जपतोऽत्रसा ॥ अन्यकालेकृतायेस्युर्नमस्काराःप्रदक्षिणाः॥१४॥ सहस्रेणफलं
यत्स्यान्मासेऽस्मिन्नेकवारतः॥ मलिम्लुचेश्रावणेमासिवेदपारायणेकृते ॥१५॥ सर्वेषांवेदमंत्राणांसिद्धिःसम्यक्प्रजायते॥ मासेऽस्मि-
न्पौरुषंसूक्तंजपतेश्रद्धयाऽन्वितः॥१६॥ कृत्वासंख्यासहस्रंतुकलौस्यात्तुचतुर्गुणम्॥ वर्णानांसंख्ययावाऽपिसतंकुर्याद्दलंद्वितः॥१७
॥ अशक्तोसंख्य यार्चांतुशतमानेनवाजपेत्॥ ब्रह्महत्यादिपापेभ्योमुच्यतेनाऽत्रसंशयः॥१८॥ गुरुतल्पेकृतेपापेप्रायश्चित्तमिदंप-
रम्॥ नास्त्येतत्सदृशंपुण्यंपवित्रंपापनाशनम्॥१९॥ विनापौरुषजाप्येननयेदेकमप्यहः॥ अर्थवादमिदंब्रूयात्सनरोनिरयीभवे
त्॥२०॥ ग्रहयज्ञःप्रकर्त्तव्यःसमिच्चरुतिलाज्यकैः॥ धूपगंधप्रसूनादिनैवेद्यादिप्रभेदतः॥२१॥ तद्रूपाणांचध्यानादिसंपाद्यचयथा
यथम्॥ कोटिहोमोलक्षहोमोऽयुतहोमस्तुशक्तितः॥२२॥ तिलैर्व्याहृतिभिःकार्योग्रहयज्ञाभिधोऽप्यसौ॥ अथवक्ष्यामिवाराणांव्रतं
निःशृणुसांप्रतम्॥२३॥ तत्रादौरविवारस्यव्रतंवक्ष्यामितेऽनघ॥ अत्राऽप्युदाहरंतीममितिहासंपुरातनम्॥२४॥ प्रतिष्ठानपुरेरम्ये
सुकर्मानामवैद्विजः॥ आसीद्दरिद्रःकृपणोभैक्ष्यचर्यापरायणः॥२५॥ एकदासगतोधान्यंयाचितुंपर्यटन्पुरम्॥ स्त्रियोददर्शस
दनेकस्यचिद्गृहमेधिनः॥२६॥ चरंत्योरविवारस्यमीलिताव्रतमुत्तमम्॥ तदोचुस्ताश्चतंदृष्ट्वाआच्छादयतसत्वरम्॥२७॥ पूजा
विधिंततोविप्रःप्रार्थयामासताःस्त्रियः॥ छाद्यतेकिंनुभोसाध्व्योभवतीभिरिदंव्रतम्॥२८॥ कथयध्वंकृपांकृत्वाममोपरि-

दयालव ः॥परोपकारसदृशोधर्मोनास्तिजगत्त्रये॥२९॥साधूनांसमचित्तानांपरार्थःस्वार्थएवहि॥दरिद्रपीडितश्चाहंश्रुत्वेदंव्रत
मुत्तमम्॥३०॥चरिष्यामिविधिंब्रूहिफलंचास्यव्रतस्यहि॥३१॥ ॥स्त्रियऊचुः॥ ॥उन्मादंवाप्रमादंवाविस्मृतिंवाकरि-
ष्यसि॥अशक्तिंवाप्यनास्थांवाकथंदेयंतवद्विज॥३२॥ इतितासांवचःश्रुत्वाविप्रेंद्रोवाक्यमब्रवीत्॥ज्ञानवानस्मिभोसाध्व्योभ
क्तिमांश्चा ऽस्मिसुव्रताः॥३३॥एवंतद्वचनंश्रुत्वाप्रौढातास्वयं ऽभवत्॥सापोवाचव्रतंतस्मैयथाभूतंचतद्विधम्॥३४॥श्रावणे
शुक्लपक्षेतुप्रथमेरविवासरे॥मौनेनोत्थायावगाह्यकुर्याच्छीतोदकेनतत्॥३५॥स्वनित्यकर्मसंपाद्यनागवल्लीदलेशुभे॥परिधिद्वा
दशयुतंमंडलंतत्रसंलिखेत्॥३६॥अर्कवद्वर्तुलंसम्यक्कुरक्तचंदनतःशुभम्॥तत्रसंज्ञायुतंसूर्यंपूजयेद्रक्तचंदनात्॥३७॥जा-
नुभ्यामवनींगत्वाअर्घ्यंद्वादशमंडले॥रक्तचंदनमिश्रंचजपाकुसुमसंयुतम्॥३८॥दद्याद्भास्करायसम्यक्श्रद्धाभक्तिपुरःस
रम्॥रक्ताक्षतैर्जपापुष्पैस्तथा ऽन्यैरुपचारकैः॥३९॥नारीकेलस्यबीजंतुखंडशर्करयायुतम्॥नैवेद्यमर्पयित्वातुमंत्रैरादित्य
लिंगकैः॥४०॥स्तवीतद्वादशवारैर्नमस्कारान्प्रदक्षिणाः॥षट्तंतुनिर्मितंसूत्रंषड्भिर्ग्रंथिभिरन्वितम्॥४१॥अर्पयित्वातुदेवेशं
बध्नीयात्तुगलेचतत्॥द्विजायवायनंदद्यात्फलैर्द्वादशभिर्युतम्॥४२॥एतद्व्रतप्रकारंचश्रावयेत्कस्यचित्पुरा॥एवंव्रतेकृतेविप्र
निर्धनोधनमाप्नुयात्॥४३॥अपुत्रोलभतेपुत्रंकुष्ठीकुष्ठात्प्रमुच्यते॥बद्धःस्याद्बंधरहितोरोगीरोगेणहीयते॥४४॥किंबहूक्ते

श्रा॰मा॰
९

नविप्रेंद्रयद्यदिच्छतिवांछितम्॥ततस्तुभीत्साधुकोऽसौव्रतस्यास्यप्रभावतः॥४५॥एवंचतुर्षुवारेषुकदाचिदपिपंचसु॥उद्याप
नंततःकार्यंव्रतसंपूर्णहेतवे॥४६॥एवंकुरुष्वविप्रेंद्रसर्वसिद्धिर्भविष्यति॥नमस्कृत्वातुताःसाध्वीविप्रःस्वगृहमाययौ॥४७॥
तथाचकारतत्सर्वंव्रतंचैवयथाश्रुतम्॥स्वकन्यकाद्वयस्यापिश्रावयामासतद्विधिम्॥४८॥तस्यश्रवणमात्रेणदर्शनात्पूजनस्य
च॥स्वरंगनोपमेकन्येजातेतस्यप्रभावतः॥४९॥तदाप्रभृतिविप्रस्यगृहेलक्ष्मीर्विवेशह॥नानाभोगैर्निर्मितैश्चलक्ष्मीवानितिसो
भवत्॥५०॥कदाचिद्गच्छताराज्ञाविप्रसद्मपुरोऽध्वना॥वातायनेस्थितेकन्येदृष्टेनिरुपमेशुभे॥५१॥देहावयवसंस्थानैर्वस्तु
यद्यच्चसुंदरम्॥त्रैलोक्येमर्त्यसंयंत्योतेपद्मचंद्रादिकंचयत्॥५२॥राजामोहंसमापेदेतत्रैवावस्थितःक्षणम्॥आमंत्र्यब्राह्मणं
सद्यःप्रार्थयामासकन्यके॥५३॥विप्रोऽपिहर्षितोभूत्वाप्रादाद्राज्ञेकन्याद्वयम्॥राजानंप्राप्यभर्तारंतेऽपिकन्येसुदान्विते॥५४॥
पुत्रपौत्रादिसंपन्नेचक्रतुश्चस्वयंव्रतम्॥व्रतमेतत्समाख्यातंमुनेनवमहोदयम्॥५५॥यस्यश्रवणमात्रेणसर्वान्कामानवाप्नु-
यात्॥अनुष्ठानफलंतस्यकिंवर्ण्यंविधिनंदन॥५६॥ ॥इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्य
प्रकीर्णकनानाव्रतरविवारादिकथनंनामपंचमोऽध्यायः॥५॥ ॥सनत्कुमारउवाच॥ ॥रविवारस्यमाहात्म्यंश्रु
तंमेहर्षकारकम्॥सोमवारस्यमाहात्म्यंश्रावणेमासिमेवद॥१॥ ॥ईश्वरउवाच॥ ॥रविर्मेनयनंतस्यमाहात्म्यंमि

अ॰
५

दसुत्तमम् ॥ उमासहितमन्नाम्नस्तस्यसोमस्यकिंपुनः ॥ २ ॥ माहात्म्यंवर्णनीयंमेयत्किंचिदपितेब्रुवे ॥ सोमश्चंद्रोविप्रराजःसो-
मःस्याद्यज्ञसाधनम् ॥ ३ निमित्तानिचतन्नाम्नः शृणुभक्तःसमाहितः ॥ मत्स्वरूपोयतोवारस्ततःसोमइतिस्मृतः ॥ ४ ॥ प्रदानास
र्वराज्यस्यश्रेष्ठश्चैवततोहिसः ॥ समस्तयज्ञफलदोव्रतकर्त्रेयतोहिसः ॥ ५ ॥ तस्यशृणुविधिंविप्रविस्तरात्कथयामिते ॥ द्वादशे-
ष्वपिमासेषुसोमवारःप्रशस्यते ॥ ६ ॥ नावल्कर्तुमशक्तश्चेच्छ्रावणेमासिकारयेत् ॥ अस्मिन्मासेव्रतंकृत्वाअब्दव्रतफलं ल-
भेत् ॥ ७ ॥ श्रावणेशुक्लपक्षेतुप्रथमेसोमवासरे ॥ संकल्पयेद्व्रतंसम्यक्शिवोमेप्रीयतामिति ॥ ८ ॥ एवंचतुर्षुवारेषुभवेयुःपंचवाय
दि ॥ प्रातःसंकल्पयेत्तत्रनक्तंचशिवपूजनम् ॥ ९ ॥ उपचारैःषोडशभिःसायंचपूजयेच्छिवम् ॥ शृणुयाच्चकथांदिव्यामेकाग्रकृत-
मानसः ॥ १० ॥ सोमवारव्रतस्यास्यकथ्यमानंनिबोधमे ॥ श्रावणेप्रथमेसोमेगृण्हीयाद्व्रतमुत्तमं ॥ स्नात्वातश्चशुचिर्भूत्वाशुक्लांब
रधरोनरः ॥ कामक्रोधाद्यहंकारद्वेषपैशून्यवर्जितः ॥ आहरेच्छ्वेतपुष्पाणिमालतीमल्लिकादिकाः ॥ अन्यैश्चविविधैःपुष्पैर-
भीष्टैरुपचारकैः ॥ १३ ॥ पूजयेन्मूलमंत्रेणत्र्यंबकेणततःपरम् ॥ शर्वायभवनाशायमहादेवायधीमहि ॥ उग्रायचोग्रनाथा-
यभवायशशिमौलिने ॥ १५ ॥ रुद्रायनीलकंठायशिवायभवहारिणे ॥ एवंसंपूज्यदेवेशमुपचारैर्मनोहरैः ॥ १६ ॥ यथावि-
भवसारेणतस्यपुण्यफलंशृणु ॥ सोमवारेयजंतेयेपार्वत्यासहितंशिवम् ॥ तेलभंत्यक्षयाल्लोकान्पुनरावृत्तिदुर्लभान् ॥ १७ ॥

श्रा॰मा अत्रनक्तेनयत्पुण्यंकथयामिसमासतः॥सप्तजन्मार्जितंपापमभेद्यंदेवदानवैः॥१८॥प्रणश्येन्नक्तभुक्तेननात्रकार्याविचा अ॰
१० रणा॥उपवासेनवाकुर्याद्व्रतमेतदनुत्तमम्॥१९॥पुत्रार्थीलभतेपुत्रान्धनार्थीलभतेधनम्॥यंयंचिंतयतेकामंतंतंप्राप्नोतिमा ६
नवः॥२०॥इहलोकेचिरंस्थित्वाभुक्त्वाभोगान्यथेप्सितान्॥विमानवरमारुह्यरुद्रलोकेमहीयते॥२१॥चलंचित्तंचलंवित्तंचलं
जीवितमेवच॥एवंज्ञात्वाप्रयत्नेनव्रतस्योद्यापनंचरेत्॥२२॥उमामहेश्वरौहैमौराजतेहृषभेस्थितौ॥यथाशक्त्याप्रकर्त्तव्यौवि
त्तशाठ्यंनकारयेत्॥२३॥मंडलंलिंगतोभद्रंदिव्यंवैकारयेच्छुभम्॥तत्रसंस्थापयेत्कुंभंश्वेतवस्त्रयुगान्वितम्॥२४॥ताम्रपात्रंवै
णवंवाकुंभस्योपरिविन्यसेत्॥तस्योपरिन्यसेद्देवमुमयासहितंशिवम्॥२५॥श्रुतिस्मृतिपुराणोक्तैर्मंत्रैःसंपूजयेच्छिवम्॥पु-
ष्पमंडपिकाकार्याविनानंचैवशोभनम्॥२६॥रात्रौजागरणंकार्यंगीतवादित्रनिःस्वनैः॥स्वगृह्योक्तविधानेनततोऽग्निंस्थाप
येद्बुधः॥२७॥ततोहोमंचशर्वाद्यैरेकादशस्कनामभिः॥पालाशाभिःसमिद्भिश्चहुनेदष्टाधिकंशतम्॥२८॥यवव्रीहितिलाद्यै-
श्चआप्यायस्वेतिमंत्रतः॥बिल्वपत्रैस्त्र्यंबकेणषड्वर्णेनापिवापुनः॥२९॥पूर्णाहुतिंततोहुत्वाकृत्वास्विष्टकृदादिकं॥आचा
र्यंपूजयेत्सम्यग्वाङ्गांच्चनसेंप्रदापयेत्॥३०॥ब्राह्मणान्भोजयेत्सम्यगेकादशसुशोभनान्॥एकादशयदास्तेभ्योवंशपात्रसम- १०
न्विताः॥३१॥संपूजितंततोदेवंदेवोपकरणानिच॥आचार्यायततोदद्यात्प्रार्थयेत्तदनंतरम्॥३२॥परिपूर्णंव्रतंमेस्याच्छिवोमेप्रीय

श्रा·मा·
११

शक्त्यांस्वर्णादिनिर्मिते ॥ संस्थाप्यपरिधानीयंरमणीयांचकंचुकीं ॥ ११ ॥ नयोरुपरिदेव्यांरक्तप्रतिमांस्थापयेत्ततः ॥ समीपभागेसं-
स्थाप्यदृषदंचोपलंतथा ॥ १२ ॥ रौप्येणनिर्मितंमात्रेएवंदद्यात्तुवायनम् ॥ षोडशाऽपिस्रुवासिन्योभोजनीयाःप्रयत्नतः ॥ १३ ॥ एवंकृते-
व्रतेविप्रसौभाग्यंसप्तजन्मसु ॥ पुत्रपौत्रादिभिश्चैववरमंतेसंपदायुता ॥ १४ ॥ ॥ सनत्कुमारउवाच ॥ ॥ केनेदंव्रतमाचीर्णं-
कस्यजातंफलंपुरा ॥ यथास्यात्प्रत्ययःशंभो कृपांकृत्वातथावद ॥ १५ ॥ ॥ ईश्वरउवाच ॥ ॥ कुरुदेशेपुराराजाश्रुतकीर्तिरि-
तिश्रुतः ॥ बभूवश्रुतिसंपन्नोकीर्तिमान्हतशात्रवः ॥ १६ ॥ चतुःषष्टिकलाभिज्ञोधनुर्विद्याविशारदः ॥ पुत्रादन्यच्छुभंसर्वंतस्यराज्ञो
बभूवह ॥ १७ ॥ संतानविषयेऽथासौबहुचिंताकुलोऽभवत् ॥ देव्याआराधनंचक्रेजपध्यानपरःसरम् ॥ १८ ॥ क्रूरेणतपसातस्यदे-
वीतुष्टाबभूवह ॥ उवाचवचनंतस्मैवरंवरयसुव्रत ॥ १९ ॥ ॥ श्रुतकीर्तिरुवाच ॥ ॥ यदिदेविप्रसन्नाऽसिपुत्रंमेदेहिशोभनं ॥
नान्यद्देवित्वत्प्रसादान्नन्यूनंकिंचिदस्तिमे ॥ २० ॥ इतितस्यवचःश्रुत्वादेवीप्राहस्मुचिस्मिता ॥ दुर्लभंयाचितंराजन्दास्येतु
शात् ॥ २१ ॥ परंशृणुष्वराजेंद्रपुत्रश्चेद्गुणवत्तरः ॥ ईप्सितश्चेत्षोडशाब्दंजीविष्यतिनचाधिकम् ॥ २२ ॥ रूपविद्याविहीनश्चे
वीभविष्यति ॥ इतिदेव्यावचःश्रुत्वानृपश्चिंतातुरोऽभवत् ॥ २३ ॥ भार्ययासहसंमंत्र्यययाचे गुणभूषितम् ॥ सर्वलक्षण
डशाब्दायुषंसुतम् ॥ २४ ॥ आज्ञापयामासतदादेवीभक्तंनराधिपम् ॥ आम्रवृक्षोममद्वारेवर्ततेनृपनंदन ॥ २५ ॥ तस्यै

अ·
७

तामिति॥बंधुभिःसहभुंजीतततोहर्षपुरःसरम्॥३३॥अनेनैवविधानेनयइदंव्रतमाचरेत्॥यंयंचिंतयतेकामं
मानवः॥३४॥शिवलोकंततोगत्वाशिवलोकेमहीयते॥कृष्णोनाचरितंपूर्वंसोमवारव्र[illegible]तंशुभम्॥३५॥नृपैःश्रेष्ठैः
मास्तिकैर्धर्मतत्परैः॥इदंयःशृणुयान्नित्यंसोऽपितत्फलमाप्नुयात्॥३६॥ ॥इतिश्रीस्कंदपुराणेईश्वरसनत्कु
श्रावणमासमाहात्म्येसोमवारव्रतकथनंनामषष्ठोऽध्यायः॥६॥ ॥ईश्वरउवाच॥ ॥सनत्कुमारवक्ष्य[illegible]
व्रतमनुत्तमम्॥यस्याऽनुष्ठानमात्रेणअवैधव्यंप्रजायते॥१॥विवाहानंतरंपंचवर्षाणिव्रतमाचरेत्॥नामास्यमंगलागौरी
व्रतंपापप्रणाशनम्॥२॥विवाहानंतरंचाद्येश्रावणेशुक्लपक्षके॥प्रथमंसोमवारस्यव्रतमेतत्तुकारयेत्॥३॥पुष्पमंडपिका
कार्याकदलीस्तंभमंडिता॥नानाविधैःफलैश्चैवपट्टकूलैश्चभूषयेत्॥४॥तत्रसंस्थापयेद्देव्याःप्रतिमांस्वर्णनिर्मिताम्॥अ-
न्यधातुमयींवाऽपिस्वशक्त्यातत्रपूजयेत्॥५॥उपचारैःषोडशभिर्मंगलागौरिसंज्ञिताम्॥दूर्वादलैःषोडशभिरपामार्गदलैस्त
था॥६॥तावत्संख्यैस्तंदुलैश्चचणानांशकलैस्तथा॥षोडशोन्मितवर्तीभिस्तावद्दीपांश्चदीपयेत्॥७॥दध्योदनंचनैवेद्यंतत्रप्र-
कल्पयेत्॥समीपंस्थापयेद्देव्याद्दृषदंचोपलंतथा॥८॥एवंकृत्वातुपंचाब्दंततउद्यापनंचरेत्॥मात्रेदद्याद्वायनंतुप्रकारं
शृणुतस्यच॥९॥प्रतिमांमंगलागौर्याःसुवर्णपलनिर्मितां॥तदर्द्धेनतदर्द्धेनशक्त्यावाप्यथकारयेत्॥१०॥तंडुलैःपूरितेभांडे

यपत्न्यैदेहिममाज्ञया ॥ भक्षणार्थंचसाधत्तागर्भंसद्योनसंशयः ॥२६॥ हृष्टोराजातथाचक्रेपत्नीगर्भंचसादधौ ॥ दशमेमासिसुषु
वेपुत्रंदेवसुतोपमम् ॥२७॥ जातकर्मादिकंचक्रेहर्षशोकसमन्वितः ॥ चिरायुरितिनामास्यपिताचक्रेशिवंभजन् ॥२८॥ प्राप्तेतुषोडशे
वर्षेचिंतामापसभार्यकः ॥ ततश्चक्रेविचारंसकष्टलब्धोह्ययंसुतः ॥२९॥ स्वसमीपेकथंमृत्युंद्रक्ष्योदुःखदोऽस्यतु ॥ काशींप्रस्था
पयामाससमातुलेनसमंविभुः ॥३०॥ अनंतरंप्रार्थयामासराजपत्नीयशस्विनी ॥ धृत्वाकार्पटिकंवेषंकाशींप्रतिसुतंनय ॥३१॥ मृत्युंज
यःप्रार्थितोऽस्मिपुत्रार्थंतुमयापुरा ॥ प्रेषयिष्यामिविश्वेशयात्रार्थंचजगत्पते ॥३२॥ तस्मान्नेयःसुतोमेऽद्यपालनीयश्चयत्नतः ॥ इ-
तिश्रुत्वास्वसुर्वाक्यंस्वस्त्रीयेनसमंययौ ॥३३॥ दिनानिकतिचिद्गच्छन्नानंदनगरंययौ ॥ तत्रराजावीरसेनोनाम्नासर्वसमृद्धिमान् ॥३४
॥ तत्कन्यामंगलागौरीसर्वलक्षणसंयुता ॥ वयोमध्यगतारम्यारूपलावण्यशालिनी ॥३५॥ उपमानानिसर्वाणितुच्छीकृत्योदयंगता
नगरोपवनेरम्येसखीभिःपरिवारिता ॥३६॥ ततस्तावपिसंप्राप्तौचिरायुर्मानवश्चसः ॥ विश्रांतिंप्रापतुस्तत्रतासांदर्शनलालसौ ॥३७
क्रीडंतीनांविनोदेनकुपितानत्रकाचन ॥ उवाचराजतनयांसारंडेत्यतिदुर्वचः ॥३८॥ श्रुत्वातदशुभंवाक्यमुवाचनृपनंदिनी ॥ अयोग्यं
भाषसेत्वंकिंमत्कुलेनैवतद्विधा ॥३९॥ प्रसादान्मंगलागौर्यास्तद्भूतस्यप्रभावतः ॥ मत्करादक्षतायस्यप्रपतिष्यंतिमूर्धनि ॥४०॥ वि-
वाहेसचिरायुःस्यादल्पायुरपिचेत्सखि ॥ ततःसमस्तास्ताःकन्याःस्वंस्वंवेश्मययुस्तदा ॥४१॥ सएवदिवसोराजकन्यायाःपाणि-

पीडने ॥ राज्ञोबाल्हीकदेशस्यदृढधर्माभिधस्यवै ॥ रुक्केतुनाम्नेपुत्रायदातुंसानिश्चिताऽभवत् ॥ सरुक्केतुरविद्यश्चकुरूपोबधिरस्तथा
॥ ४३ ॥ ततस्तेमंत्रयामासुर्नैयोन्योऽन्यवरःपरः ॥ अथसिद्धेविवाहेचरुक्केतुस्तत्रगच्छतु ॥ ४४ ॥ ततश्चिरायुषंगत्वायाचिरेमातुलंप्रति
॥ दैवोऽस्मास्वयमयंबालःकार्यसिद्धिर्हिनोभवेत् ॥ ४५ ॥ परोपकारतुल्योहिधर्मोनास्त्यपरोभुवि ॥ मातुलस्तद्वचःश्रुत्वाअंतर्हृष्टमना-
अभूत् ॥ ४६ ॥ पूर्वंश्रुतंचोपवनेकन्यावाक्यमनेनयत् ॥ एकवारंतथाप्याहयुष्माभिर्याच्यतेकथम् ॥ ४७ ॥ वस्त्रालंकरणादीनियाच्यं
कार्यस्यसाधने ॥ नवरोयाच्यतेक्वापिदीयतेगौरवाद्धिवः ॥ ४८ ॥ विवाहंसाधयामासुर्नीत्वानत्रचिरायुषम् ॥ सप्तपद्यादिकेजातेरात्रौ
गौरीहरांतिके ॥ ४९ ॥ सहासौमंगलागौर्यासुप्तोहर्षसमन्वितः ॥ तंदन्हिषोडशाब्दानिसमाप्तानिचिरायुषः ॥ ५० ॥ निशीथेसर्परूपेण
कालस्तत्रसमीयिवान् ॥ तदंतरेसुप्तपक्ताजागृतादैवयोगतः ॥ ५१ ॥ सादर्दर्शमहासर्पंचकंपेभयविह्वला ॥ धैर्यंकृत्वानदाबालापूज
यामाससोरगम् ॥ ५२ ॥ उपचारैःषोडशभिर्दुग्धंपातुंददौबहु ॥ प्रार्थयामासतंसर्पंदीनवाण्याचतुष्टये ॥ ५३ ॥ ययाचेमंगलागौरीकरि
ष्येव्रतमुत्तमं ॥ जीयान्मेपतिरेतस्मात्चिरंजीवितथाकुरु ॥ ५४ ॥ एतस्मिन्नंतरेसर्पःकरकेप्रविवेशह ॥ कंचुक्यास्वीययासातुचक्रेत
न्मुखबंधनम् ॥ ५५ ॥ एतस्मिन्नंतरेभर्त्ताअंगमोटनपूर्वकम् ॥ जागृतश्चाऽब्रवीद्भार्यांक्षुधामांबाधतेप्रिये ॥ ५६ ॥ मातुःसकाशंगत्वा १२
साआनयामासपायसम् ॥ लड्डुकादिचतद्दत्तंबुभुजेप्रीतमानसः ॥ ५७ ॥ हस्तक्षालनकालेतुतन्हस्तान्मुद्रिकाऽपतत् ॥ तांबूलंभक्ष-

पित्वातुभस्कम्तःपुनरेवसः॥५८॥ततःसाकरकंल्यत्कुंनिर्गच्छत्तुविधेर्गतिः॥हारकांतिंबहिर्दृष्ट्वास्फुरंतींविस्मयंययौ॥५९॥दृष्ट्वा
घटस्थंतंहारंस्वकंठेन्वदधारसा॥किंचिन्निशावशेषेतुमातुलस्तांनिनायसः॥६०॥ततस्तेवरपक्षीयाःस्फकेतुंतत्रचानयन्॥दृष्ट्वातं-
मंगलागौरीऊचताऽयंनमेपतिः॥६१॥तामूचुस्तेततःसर्वेकिमिदंभाषसेशुभे॥परिचायकमस्तीहकिंचित्तत्वद्वदस्वनः॥६२॥
मंगलागौर्युवाच॥ ॥मेदत्तंतेनरात्रौचनवरत्नांगुलीयकम्॥अस्यांगुलौतन्निक्षिप्यपश्यध्वंपरिचायकम्॥६३॥पत्यादत्तोस्ति-
मेहारोरात्रौतद्रत्नसंचयः॥कीदृशोऽनेनचान्योसौप्रतिवीरपरान्वितम्॥६४॥किंचास्मसेन्चनेरात्रौतत्पदंकुंकुमान्वितम्॥ऊरौमेवर्तते
तच्चसर्वेपश्यतमाचिरम्॥६५॥किंचरात्रौभाषणादिभक्षणादिचयत्कृतम्॥तदनेनचवक्तव्यंतदास्यान्मेपतिःस्वयम्॥६६॥एवं-
श्रुत्वातुतद्वाक्यंसाधुसाध्वितिचाब्रवीत्॥एकस्यापिनयोगोऽभूत्तदासर्वैर्निषेधितः॥६७॥तदानेवरपक्षीयाजग्मुःसर्वेयथागतं॥ज
नकोमंगलागौर्याःश्रुतकीर्तिःकुरुद्वहः॥६८॥अन्नपानादिकंसत्रंचकारसमहामनाः॥वरपक्षस्यवृत्तांतःश्रुतःकर्णोपकर्णतः॥६९
॥स्वरूपस्यकुरूपत्वादानीतःकश्चनाहृतः॥स्थापयामाससौधेतुकन्यांजवनिकावृताम्॥७०॥एवंगतेहायनेतुयात्रांकृत्वासमातुलः
॥चिरायुःप्रययौतत्रकिंजातमवलोकितुम्॥७१॥तंसाजामातरंदृष्ट्वालोकोत्तरमुदान्विता॥पितरौकथयामासममभर्त्तासमागतः
॥७२॥सफहरूपंसमाहूयपूर्वोक्तंपरिचायकम्॥दृष्ट्वासर्वमपिह्यस्मैददौकन्यांशुचिस्मिताम्॥७३॥शिष्टैःपरिणयोत्साहंकारयामास

पं८॥ जनकोमंगलागौर्यावीरसेनोनराधिपः॥६८॥

श्रा॰मा॰ भूपतिः॥वस्त्राण्याभरणादीनिसेनामश्वान्गजान्रथान्॥७५॥प्रस्थापयामासनृपोदत्वाऽन्यदपिभूरिशः॥पत्न्यासहचिरायुःसमा- अ
१३ तुलेनसमन्वितः॥७५॥स्वपुरंसेनयासार्द्धंजगामकुलनंदनः॥श्रुत्वाजनमुखात्तस्यआगतंपितरावुभौ॥७६॥विश्वासंलेभतुर्नैवस्यात्कथं ७
दैवमन्यथा॥एतस्मिन्नंतरेप्राप्तःपित्रोरंतिकमेवसः॥७७॥पपातपादयोर्भक्त्यापित्रोःस्नेहपरिप्लुतः॥मूर्ध्न्यवघ्रायतंपुत्रंपरमांमुदमापतुः
॥७८॥स्नुषाऽपिमंगलागौरीश्वशुरौप्रणनामसा॥अंकेनिवेश्यतांश्वश्रूःपप्रच्छोदंतमंजसा॥७९॥स्नुषाऽपिमंगलागौर्याव्रतमाहात्म्यमु
त्तमम्॥कथयामासतत्सर्वंयथावृत्तंमहामुने॥८०॥इत्येतत्कथितंतुभ्यंमंगलागौरिकाव्रतम्॥यएतच्छृणुयात्कश्चिद्यश्चापिपरिकीर्त
येत्॥८१॥मनोरथास्तस्यसर्वेसिध्यंत्यत्रनसंशयः॥८२॥ ॥सूतउवाच॥ ॥सनत्कुमारमित्येवकथयामासधूर्जटिः॥सत्वानंदप्र
रंलेभेश्रुत्वाकार्यकरंव्रतम्॥८३॥इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येमंगलागौरीव्रतकथनंनामसप्तमो
ध्यायः॥७॥ ॥ईश्वरउवाच॥ ॥बुधगुर्वोरथोवक्ष्येव्रतंपापप्रणाशनम्॥यत्कृत्वाश्रद्धयामर्त्यःपरांसिद्धिमवाप्नुयात्
॥१॥प्रजापतिःशीतरश्मिंद्विजराज्येऽभ्यषेचयत्॥सकदाचिद्गुरोर्भार्यांतारानाम्नींददर्शह॥२॥रूपयौवनसंपन्नांलावण्यमदगर्विता
म्॥मोहितोरूपसंपत्त्याकामबाणवशंगतः॥३॥स्वगृहेस्थापयित्वातुबलात्सबुभुजेचताम्॥एवंबहुतिथेकालेगतेपुत्रोबभूवह॥४॥बु १३
धोबुधोरूपशालीसर्वलक्षणसंयुतः॥अन्वेषयन्गुरुःपत्नींज्ञानवान्शशिसद्मनि॥५॥ययाचेदेहिमेभार्यांत्वंकथं गुरुतल्पगः॥गुरु

नत्वकृतात्पापान्निष्कृतिस्तेकथंभवेत्॥६॥महापातकसंयोगेकथंतेबुद्धिराहृता॥शुभमेवभयच्छेमांगुरुभार्यांममप्रियाम्॥७॥रहसिप्रा
यश्चित्तंचकृत्वानिःकल्मषोभव॥नोचेदिंद्रसमीपेतेआगःसंकथयाम्यहम्॥८॥इत्येवंबहुधोक्तोपिनददौतांकलंकताम्॥तदादेवसभां
गत्वाकथयामासगीष्पतिः॥९॥चंद्रेणमेह्यपहृताभार्यातांनददातिसः॥देवराजोसिशक्रत्वंदापनीयात्वयाज्ञया॥१०॥नचेत्त्वांतत्कृतंपापंसं
क्रमिष्यत्यसंशयम्॥राजाराष्ट्रकृतंपापंभुंक्तेशास्त्रविनिर्णयात्॥११॥दुर्बलस्यबलंराजापुराणेत्विनिभण्यते॥इतिश्रुत्वागुरोर्वाक्यंचंद्र
माहूयवासवः॥१२॥आज्ञापयामासरुषादेहिभार्यांगुरोर्विधो॥अन्यदाराभिगमनंकेवलंपापसंज्ञितम्॥१३॥गुरुदाराभिगमनंमहापात-
कसंज्ञितम्॥तस्माच्चंद्रगुरोर्भार्यांदेहित्वमविचारयन्॥१४॥देवेंद्रवचनंश्रुत्वानिशापतिरथाऽब्रवीत्॥दास्येत्वदाज्ञयाभार्यांपुत्रंनैवददा-
म्यहम्॥१५॥मत्सकाशात्कृतोजातोममैवभवयस्यतः॥गीष्पतिस्त्वाहमत्तोभूत्ततःसंशयिताःसुराः॥१६॥ततस्तेनिर्णयंचक्रुर्मातांजा
नातिचांगजम्॥पप्रच्छुस्तेतदातारांकेनाऽयंगर्भआहितः॥१७॥सत्यंवदस्वकल्याणिनमिथ्यावक्तुमर्हसि॥तदालज्जान्वितातारा ऑर
सोऽयंविधोःसुतः॥१८॥गीष्पतेःक्षेत्रजश्चासौयोग्यःस्यात्तस्यदीयताम्॥शास्त्रतस्तेविचार्याऽथददुश्चंद्रायतंबुधम्॥१९॥तदाखिन्नं
गुरुंदृष्ट्वाददौदेवावरंतयोः॥गच्छस्वत्वंचंद्रगृहंतवाप्यस्तिसुतोद्वयम्॥२०॥चंद्रस्यगीष्पतेश्चाऽयंग्रहत्वंपात्वसौसुतः॥अन्यच्चापिसु
रार्चायगृहाणेमंवरंशुभम्॥२१॥यत्करिष्यतिमेधावीमिलित्वायुवयोर्व्रतम्॥तस्यस्यात्सकलासिद्धिःसत्यंसत्यंनसंशयः॥२२॥श्रावणे

श्रा॰मा॰ मासिसंप्राप्तेशंकरस्यमहाप्रिये ॥ बुधगुर्वोर्वासरयोर्यैकरिष्यंतिपूजनम् ॥२३॥ नैवेद्यंदधिभक्तेनसाधनेमूलकंभवेत् ॥ युवयोर्मूर्तिमालि- अ॰
१४ ख्यस्थानभेदात्फलंलभेत् ॥२४॥ बालांदोलोपरिस्थानेलिखित्वापूजयेद्यदि ॥ सपुत्रंलभतेदीर्घायुषंसर्वगुणान्वितम् ॥२५॥ कोशागारेलि ८
खित्वातुपूजयेद्यदिमानवः ॥ तस्यकोशाभिवर्द्धंतेक्षीयंतेनकदाचन ॥२६॥ पाकागारेपाकवृद्धिर्देवागारेतुतत्कृपा ॥ शय्यागारेपूजनेतुस्त्री
वियोगंनकर्हिचित् ॥२७॥ धान्यागारेधान्यवृद्धिरेवंतत्तत्फलंलभेत् ॥ सप्तवर्षाणिकृत्वैवंततउद्यापनंचरेत् ॥२८॥ अधिवासयान्हिपूर्वस्मि
न्रात्रौजागरणंचरेत् ॥ सुवर्णप्रतिमांकृत्वापूजयित्वायथाविधि ॥२९॥ उपचारैःषोडशभिस्ततोहोमंसमाचरेत् ॥ तिलैराज्येनचरुणात-
थैवचसमिद्भुजैः ॥३०॥ अपामार्गाश्वत्थमयैस्ततःपूर्णाहुतिंचरेत् ॥ स्वस्त्रीयमातुलौचैवभोजनीयौप्रयत्नतः ॥३१॥ ब्राह्मणान्भोजयेदः=
न्यान्भुंजीतस्वयमेवच ॥ एवंकृतेसप्तवर्षसर्वान्कामानवाप्नुयात् ॥३२॥ विद्याकामनयाकुर्याद्दृढशास्त्रार्थविद्भवेत् ॥ बुधस्तुबुधतांदद्या
द्गुरुस्तुगुरुतांतथा ॥३३॥ ॥सनत्कुमारउवाच॥ ॥भगवन्यत्त्वयाप्रोक्तंभोज्योस्वस्त्रीयमातुलौ ॥ एतन्निमित्तंकथयय
दिवत्कुतंसंभवेत् ॥३४॥ ॥ईश्वरउवाच॥ ॥पुराकोचिद्द्विजन्मानौदीनौस्वस्त्रीयमातुलौ ॥ दरिद्रौपर्यटतौतावुदरार्थंकृत
श्रमौ ॥३५॥ कस्मिंश्चिन्नगरेरम्येगतौधान्यंप्रयाचितुं ॥ गृहेगृहेपश्यतांतौश्रावणेमासितद्व्रतम् ॥३६॥ नतद्वारेव्रतंतत्तद्बुधगुर्वोर्नकु १४
त्रचित् ॥ अन्योन्यंतौनदातत्रविचारंचक्रतुश्चिरात् ॥३७॥ वासराणांतुसर्वेषांव्रतंसर्वत्रदृश्यते ॥ बुधगुर्वोर्विनातस्मादेतावाभ्यांत

द्व्रतं शुभम् ॥ ३८ ॥ अनुच्छिष्टं यतश्चास्ति तस्मात्कर्त्तव्यमादरात् ॥ विप्रअज्ञानात्परं तस्य संशयं प्रापतुः पुनः ॥ ३९ ॥ तावत्तस्यां नि-
शायां तु स्वप्नो ऽभूद्द्विधिदर्शनः ॥ तथा तौ चक्रतुः पश्चात्परां संपदमापतुः ॥ ४० ॥ प्रत्यहं वृद्धिगावा ऽभूत्संपत्तिः सर्वगोचरा ॥ एवं कृ-
त्वा समवर्षपुत्रपौत्रादिसंयुतौ ॥ ४१ ॥ साक्षाद्भूतौ बुधगुरू वरं च ददतुस्तयोः ॥ आवाभ्यामावयोर्यस्मा द्भूतमेतत्प्रवर्त्तितम् ॥ ४२ ॥ इ
त्थिचारयत तस्माद्यः करिष्यति शुभं व्रतम् ॥ स्वकीयमातुलौ तेन भोजनीयौ प्रयत्नतः ॥ ४३ ॥ एतद्व्रतप्रभावेण सर्वसिद्धिः परा भवेत् ॥
अंते चा ऽस्मल्लोकवासो यावच्चंद्रदिवाकरौ ॥ ४४ ॥ इति श्रीस्कंदपुराणे ईश्वरसनत्कुमार संवादे श्रावणमासमाहात्म्ये बुधगुरुव्रतक
थनं नामाष्टमो ऽध्यायः ॥ ८ ॥ ॥ ईश्वर उवाच ॥ ॥ इतः परं प्रवक्ष्यामि शुक्रवारकथानकम् ॥ यच्छ्रुत्वा श्रद्धया मर्त्यो मु
च्यते सर्वसंकटात् ॥ १ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ सुशीलो नाम राजासीत्पांड्यवंशसमुद्भवः ॥ २ ॥ बहु प्रयत्नशीलो
पि अपत्यं नैव चाप्नुवान् ॥ तस्य भार्या सुकेशीति नाम्ना सर्वगुणान्विता ॥ ३ ॥ अपत्यं न यदा लेभे महाचिंतामवाप सा ॥ स्त्रीस्वभावाव
त्तदा वस्त्रखंडानि प्रतिमासिके ॥ बध्वोदरं तदा चक्रे महासाहसमानसा ॥ अन्वेषयद्गर्भिणीं सा स्वप्रसूत्यनुसारिणीं ॥ ५ ॥ भावि
नादैवयोगेन गृहिणी तत्पुरोधसः ॥ गर्भिण्यासीत्तदा राज्ञः पत्नी कपटकारिणी ॥ ६ ॥ प्रसूतिकारिणीं कांचित्तत्कार्ये सा न्ययोजय
त् ॥ दत्वा बहुधनं तस्यै सूतिकायै रहोगता ॥ ७ ॥ राजा चक्रे पुंसवनं तथैवा ऽनवलोभनम् ॥ सीमंतोन्नयनं काले महाहर्षसमन्वितः

॥८॥ तस्याः प्रसूतिसमयं श्रुत्वासापि तथाऽकरोत् ॥ आद्यगर्भवतीयस्मात्सापुरोधःकुटुंबिनी ॥ ९ ॥ अज्ञाप्रसूतिकाकृत्येसूचिका 
वचनेस्थिता ॥ तांसूचिकावंचयंतीचक्रेतन्नेत्रबंधनम् ॥ १० ॥ प्रेषयामासतंपुत्रंसाराजमहिषींप्रति ॥ कस्यचिन्दूतःशीघ्रमज्ञा
तमपिकेनचित् ॥ ११ ॥ राज्ञीगृहीत्वातंपुत्रंप्रसूताऽस्मीत्यघोषयत् ॥ पुरोधःस्त्रीनेत्रबंधंमोक्षयामाससूचिका ॥ १२ ॥ सहनीतंमांस
पिंडंतस्यैप्रादर्शयच्चसा ॥ विस्मयंचैवखेदंचस्वयंचक्रेनदप्नतः ॥ १३ ॥ किमरिष्टमिदंजातंपत्याकार्यंचशांतिकं ॥ संततिर्नास्तिचे-
न्मास्तुस्वदिष्ट्याजीवितास्म्यहो ॥ १५ ॥ परंसंशयितासासीत्प्रसवस्पर्शचिंतनात् ॥ १५ ॥ ॥ ईश्वरउवाच ॥ ॥ राजाश्रु
त्वापुत्रजन्मजातकर्माद्यकारयत् ॥ गजानश्वान्रथांश्चैवब्राह्मणेभ्योददौनृपः ॥ १६ ॥ बद्धान्कारागृहेसर्वान्मोचयामासहर्षितः ॥
सूतकांतेनामकर्मसंस्कारान्सर्वतोऽकरोत् ॥ चक्रेप्रियव्रतइतिनामपुत्रस्यभूमिपः ॥ १७ ॥ श्रावणेमासिसंप्राप्तेपुरोधोदयितासस
ती ॥ जीवंतिकांशुक्रवारेपूजयामासभक्तितः ॥ १८ ॥ कुड्येविलिख्यतन्मूर्तिंबहुबालसमन्विताम् ॥ पुष्पमालिकयापूज्यपंचदीपै
र्दीपयत् ॥ १९ ॥ गोधूमपिष्टसंभूतैस्तानभक्षयतस्वयम् ॥ अक्षतांश्चैवविक्षेपयत्रमेबालकोभवेत् ॥ २० ॥ तत्रत्वयारक्षणीयोजी-
वंतिकरुणार्णवे ॥ इतिप्रार्थ्यकथांश्रुत्वानमश्चक्रेयथाविधि ॥ २१ ॥ जीवंतिकाप्रसादेनदीर्घायुर्बालकोऽभवत् ॥ ररक्षतमहोरात्रं-
देवीतन्मातृगौरवात् ॥ २२ ॥ एवंकालेगतेराजाकालधर्ममुपेयिवान् ॥ पितृभक्तोऽथतत्पुत्रश्चक्रेतत्सांपरायिकम् ॥ २३ ॥ प्रियव्र 

त्तोऽभिषिक्तोभूत्राज्येमंत्रिपुरोहितैः॥ पालयित्वाप्रजाराज्यंभुक्त्वासकतिचित्समाः॥२४॥ पितॄणस्यविमोक्षायगयांगंतुंप्रच
क्रमे॥ राज्यभारममात्येषुस्थाप्यवृद्धेषुभक्तिनः॥२५॥ राज्यभावंपरित्यज्यवेषंकार्पटिकंदधे॥ मार्गमध्येक्वचित्सूर्याकस्यचिद्गृहमे
धिनः॥२६॥ चक्रेवासंगृहेतस्यप्रसूतागृहिणीत्वभूत्॥ पुराषष्ठ्यामंचमेऽन्हितत्पुत्राःपंचमारिताः॥२७॥ तदापिपंचमदिनेप्यासी
त्तत्रनृपोगतः॥ रात्रौक्षमेनृपेषष्ठीबालंनेतुंसमागता॥२८॥ जीवंत्त्यावारितासातुनृपमुल्लंघ्यमाव्रज॥ षष्ठीनिषेधाज्जीवंत्यासाजगा
मयथागतम्॥२९॥ जीवितंपंचमदिनेबालंलेभेगृहाधिपः॥ एनस्मभावःप्रायोयंप्रार्थयामासतंनृपम्॥३०॥ राजन्नद्यतनेचान्हितव
वासोऽस्तुमेगृहे॥ तवप्रसादान्मेबालःषष्ठोऽयंजीवितःप्रभो॥३१॥ एवंसंप्रार्थितस्तेनउवासकरुणानिधिः॥ ततोगतोगयांराजा
प्रवृत्तःपिंडपातने॥३२॥ विष्णुपदेतत्रकिंचिद्दृष्ट्वाश्चर्यमभूत्तदा॥ पिंडस्यग्रहणार्थेहिनिःसृतंतुकरद्वयम्॥३३॥ परंविस्मयमापन्नः
संशयंप्रापभूपतिः॥ ब्राह्मणानुमतःपश्चात्पिंडंविष्णुपदेददौ॥३४॥ पप्रच्छब्राह्मणंकंचिज्ज्ञानिनंसत्यवादिनम्॥ सचाहब्राह्म-
णस्तस्मैपितृद्वयकराविमौ॥ किमिदंतद्गृहेगत्वामात्रेपृच्छवदिष्यति॥ ततश्चिंतापरोदुःखीहृदिनानाविचारयत्॥३६॥ यात्रांकृ-
त्वातत्रयातोयत्राऽसौजीवितःशिशुः॥ तदापिपंचमदिनमासीत्सैवप्रसूतिका॥३७॥ द्वितीयोप्यभवत्पुत्रोरात्रौषष्ठीसमाययौ॥
पुनश्चजीवंतिकयानिषिद्धासाब्रवीच्चताम्॥३८॥ एतस्यावश्यकंकिंतेएतन्मात्राचकिंव्रतम्॥ क्रियतेतेयतस्त्वंचएनंरक्षस्यहर्निशं॥

श्रा·मा· षष्ठीवाक्यमितिश्रुत्वाजीवंतिःप्राहसस्मिता ॥ तन्निमित्तंनिशिद्रष्टुंजाग्रदासीन्मृषास्वपन् ॥ ४० ॥ संवादमुभयोराजाशुश्रावसक- अ·
१६ लंतदा ॥ श्रावणेभृगुवारेतुएतन्मातामभार्चने ॥ ४१ ॥ व्रतस्यनियमंसर्वंकुरुतेतंवदामिते ॥ परिधत्तेनवसनंहरितंकंचुकींतथा ॥ ४२ ॥ १
नधारयतिनहूर्णकाचकंकणंकरे ॥ कदापिनोल्लंघयतितंदुलक्षालनोदकम् ॥ ४३ ॥ नैवगच्छत्यधस्ताच्चहरित्पल्लवमंडपम् ॥ कू-
कलस्यचशाकस्यानाश्नातिहरिवर्णतः ॥ ४४ ॥ सर्वमेवममप्रीत्यैमारयिष्यामिमासतम् ॥ श्रुत्वासर्वंनृपःप्रातर्जगामस्वपुरंप्रति ॥
प्रत्युद्गतानागरिकादेशिकाःसर्वएवहि ॥ पप्रच्छमानरंराजात्वयाजीवंतिकाव्रतम् ॥ ४६ ॥ क्रियतेनुकथंमातर्नवेद्मीतिचसाऽब्रवीत्
साद्गुण्यार्थंतुयात्रायाब्राह्मणांश्चसुवासिनीः ॥ ४७ ॥ इच्छन्नृपोभोजयितुंव्रतंचापिपरीक्षितुं ॥ सुवासिनीभ्योवस्त्राणिकंचुक्यःकं-
कणानिच ॥ ४८ ॥ आगतव्यंभोजनार्थंसर्वाभीराजसद्मनि ॥ ततःपुरोधसःपत्नीतत्रदूतमुवाचह ॥ ४९ ॥ हरिहूर्णंमयाकिंचिद्गृह्य
तेनकदाचन ॥ दूतोनिवेदयामासराज्ञेतस्याःप्रभाषितम् ॥ ५० ॥ राजासर्वंरक्तवर्णंतस्यैसंप्रेषयच्छुभम् ॥ अंगीकृत्यचतत्सर्वंसापि
राजगृहंययौ ॥ ५१ ॥ पूर्वद्वारेतंडुलानांदृष्ट्वाक्षालनजंजलम् ॥ मंडपंचहरिहूर्णंदृष्ट्वाऽन्यद्वारतोययौ ॥ ५२ ॥ राजापुरोधसःपत्नीं
नत्वापप्रच्छचाऽखिलम् ॥ निमित्तंनियमस्यास्यसाप्रोवाचव्रतंभृगौ ॥ ५३ ॥ तंदृष्ट्वातुमुदात्यंतंप्रस्नुतौतत्पयोधरौ ॥ सिषिंचतुस्त-
राजानंधाराभिःसर्वतःस्तनौ ॥ ५४ ॥ गयायांकरयुग्मेनदेव्याःसंवादतस्तथा ॥ स्तनयोःप्रस्रवाच्चैवराजाप्रत्ययमापसः ॥ ५५ ॥ १६

मालिकांमातरंगत्वापप्रच्छविनयान्वितः॥ मातर्मेमीनब्रूहिसत्यंवृत्तांतंममजन्मनः॥ ५६॥ श्रुत्वासाकेशिनीप्राहयथातथ्येनसर्वशः॥
हृष्टोभूत्वानमश्चक्रेपितरौस्वस्यजन्मदौ॥ ५७॥ संपत्त्यावर्द्धयामासतौपरांमुदमापतुः॥ एकस्मिन्दिवसेराजाजीवंतींप्रार्थयन्निशि॥
५८॥ जीवंत्ययंजन्मदोमेगंगायांचकरोकथं॥ तदास्वप्नगतादेवीप्राहसंशयनाशकम्॥ ५९॥ मयात्वत्सत्ययार्थेयंकृतामायानसंशयः॥
एतत्तेसर्वमाख्यातंश्रावणेभृगुवासरे॥ ६०॥ एतद्व्रतमनुष्ठायसर्वान्कामानवाप्नुयात्॥ ६१॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसं
वादेश्रावणमाससमाहात्म्येशुक्रवारजीवंतिकाव्रतकथनंनामनवमोध्यायः॥ ९॥ ॥ईश्वरउवाच॥ ॥अतःपरंप्रव
क्ष्यामिमंदवारविधिंतव॥ सनत्कुमारयत्कृत्वामंदत्वंनैवजायते॥ १॥ श्रावणेमासिदेवानांत्रयाणांपूजनंशनौ॥ नृसिंहस्यशनेश्चैव
अंजनीनंदनस्यच॥ २॥ कुड्येस्तंभेश्वथवालिख्यनृसिंहप्रतिमांशुभाम्॥ हरिद्रायुक्तचंदनेनलक्ष्म्यासहजगत्पतिम्॥ ३॥ संपूज्यनी
लपुष्पैश्वरक्तैःपीतैश्वशोभनैः॥ नैवेद्यंखिचडीसंज्ञंशाकंकुंजरसंज्ञितम्॥ ४॥ स्वयंचैवतदश्नीयाद्ब्राह्मणांश्चैवभोजयेत्॥ तिल-
तैलघृतस्नानंनृसिंहस्यप्रियंभवेत्॥ शनैश्वरदिनेतैलंप्रशस्तंसर्वकर्मसु॥ अभ्यज्याब्राह्मणास्तद्वत्सुवासिन्यस्तुतैलतः ६॥
स्वयमभ्यज्यचस्नायात्कुटुंबसहितःशनौ॥ माषान्नंचप्रकर्त्तव्यंप्रीणातिनरकेसरी॥ ७॥ एवंचतुर्षुवारेषुश्रावणेमासितद्व्रतम्॥
कुर्वीततस्यसदनेलक्ष्मीःस्थिरतराभवेत्॥ ८॥ धनधान्यसमृद्धिश्चअपुत्रःपुत्रवान्भवेत्॥ इहलोकेसुखंभुक्त्वाअंतेवैकुंठमाप्नु

ग्रा-मा यात् ॥ ९ ॥ दिग्व्यापिनीचसत्कीर्तिर्नृसिंहस्यप्रसादतः ॥ एतत्तेकथितंसौम्यनृसिंहव्रतमुत्तमम् ॥ १० ॥ एवंशनिप्रीणनायकर्तव्यंतच्छृणु अ०
१७ प्रभो ॥ स्वजंब्राह्मणमेकंतुतदभावेतुकंचन ॥ ११ ॥ अभ्यज्यतिलतैलेनस्नापयेदुष्णवारिणा ॥ नृसिंहोक्तेनचान्येनभोजयेच्छ्रद्धया १०
न्वितः ॥ १२ ॥ तैलंलोहंतिलान्माषान्दद्यात्कंबलमेवच ॥ शनैश्वरप्रीणनायशनिर्मेप्रीयतामिति ॥ १३ ॥ शनैश्वरस्याभिषेकंतिलतै
लेनकारयेत् ॥ प्रशस्ताअक्षतास्तस्यपूजनेतिलमाषयोः ॥ १४ ॥ ध्यानंतस्यचवक्ष्यामिशृणुष्वावहितोमुने ॥ शनैश्वरःकृष्णवर्णोमं
दःकाश्यपगोत्रजः ॥ १५ ॥ सौराष्ट्रदेशसंभूतःसूर्यपुत्रोवरप्रदः ॥ दंडाकृतिर्मंडलेस्यादिंद्रनीलसमद्युतिः ॥ १६ ॥ बाणबाणासनध
रःशूलभृग्गृध्रवाहनः ॥ यमाधिदैवतश्चैवब्रह्मप्रत्यधिदैवतः ॥ १७ ॥ कस्तूर्यगुरुगंधःस्यात्तथागुग्गुलधूपकः ॥ कृसरान्नप्रियश्चैव
विधास्यःपरिकीर्तितः ॥ १८ ॥ प्रतिमापूजनेचास्यकार्यालोहमयीशुभा ॥ अस्योद्देशेनपूजायांदानेकृष्णोद्विजोत्तमः ॥ १९ ॥ कृष्णव-
स्त्रयुगंदद्याद्द्याद्गांकृष्णवत्सकाम् ॥ एवंसंपूज्यविधिवत्प्रार्थयेच्चकृतांजलिः ॥ २० ॥ यःपुनर्नष्टराज्यायनलायपरितोषितः ॥ ददौ
निजंमहाराज्यंसमेसौरिःप्रसीदतु ॥ २१ ॥ शनिंनीलांजनप्रख्यंमंदचेष्टाप्रसारिणम् ॥ छायामार्त्तंडसंभूतंनमस्यामिशनैश्वरम् ॥ २२ ॥
नमस्तेकोणसंस्थायपिंगलायनमोस्तुते ॥ प्रसादंकुरुदेवेशदीनस्यप्रणतस्यच ॥ २३ ॥ एवंस्तुत्वाप्रार्थयित्वाप्रणमेच्चपुनःपुनः ॥ पू १७
जनेवैदिकोमंत्रःशंनोदेवीरितिस्मृतः ॥ त्रैवर्णानांचशूद्राणांनाममंत्रःप्रकीर्तितः ॥ यएवंविधिनामंदंपूजयेत्सुसमाहितः ॥ २५ ॥

नदीयंतुभयंनस्यस्वप्नेऽपिनभविष्यति ॥ एवमेतद्व्रतंविप्रयेकरिष्यंतिमानवाः ॥ २६ ॥ वासरे वासरेप्राप्तेश्रावणेमासिभक्तितः ॥ तेषां
शनैश्वरकृतापीडादेशेऽपिनोभवेत् ॥ २७ ॥ प्रथमोवाद्वितीयोवाचतुर्थःपंचमोपिवा ॥ सप्तमश्चाष्टमोवापिनवमोद्वादशोपिवा ॥ २८ ॥ ज
न्मराशेःस्थितोमंदःपीडांनकुरुतेतदा ॥ शमग्निरितिमंत्रस्यतत्प्रसादेजपोमतः ॥ २९ ॥ इंद्रनीलमणेर्दानंप्रदद्यात्तस्यतुष्टये ॥ अतःपरं
प्रवक्ष्यामिहनुमत्तुष्टयेविधिम् ॥ ३० ॥ शनिवारेश्रावणेचअभिषेकंसमाचरेत् ॥ रुद्रमंत्रेणतैलेनहनुमत्प्रीणनायच ॥ ३१ ॥ तैलमिश्रित
सिंदूरलेपंतस्यसमर्पयेत् ॥ जपाकुसुममालाभिरर्कमालाभिरेवच ॥ मालाभिर्मंदाराभिश्चवटकानांतथैवच ॥ पूजयेदंजनीपुत्रंनथा
न्यैरुपचारकैः ॥ ३२ ॥ यथाविधियथावित्तंश्रद्धाभक्तिसमन्वितम् ॥ जपेद्द्वादशनामानिहनुमत्प्रीतयेबुधः ॥ ३४ ॥ हनुमानंजनीसूनु-
र्वायुपुत्रोमहाबलः ॥ रामेष्टःफाल्गुनसखःपिंगाक्षोमितविक्रमः ॥ ३५ ॥ उदधिक्रमणश्चैवसीताशोकविनाशकः ॥ लक्ष्मणप्राण
दाताचदशग्रीवस्यदर्पहा ॥ ३६ ॥ द्वादशैतानिनामानिप्रातरुत्थाययःपठेत् ॥ नाशःसंजायतेतस्यसर्वसंपत्प्रजायते ॥ ३७ ॥ श्रा
वणेमंदवारेषुएवमाराध्यवायुजम् ॥ वज्रतुल्यशरीरंस्यादरोगोबलवान्नरः ॥ ३८ ॥ वेगवान्कार्यकरणेबुद्धिवैभवभूषितः ॥ श
त्रुसंक्षयमाप्नोतिमित्रवृद्धिःप्रजायते ॥ ३९ ॥ वीर्यवान्कीर्तिमांश्चैवप्रसादादंजनीजनेः ॥ आंजनेयालयेलक्षंहनुमत्कवचंपठे
त् ॥ ४० ॥ अणिमाद्यष्टसिद्धीनांसाधकःस्वामितामियात् ॥ यक्षराक्षसवेतालादर्शनात्तस्यवेगतः ॥ ४१ ॥ पलायंतेदशदिशः

श्रा॰मा॰ कंपिताभयविह्वलाः॥ अश्वत्थालिंगनंचैव अश्वत्थस्यच पूजनम्॥४२॥ मंदभिन्नेनकर्तव्यः स्पर्शोऽश्वत्थस्यसत्तम॥ शनावालिंग- अ॰
१८ नंतस्यसर्वसंपत्समृद्धिदम्॥ पूजनंसप्तवारेषुतत्रापिश्रावणेधिकम्॥४३॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमा ११
समाहात्म्येशनैश्वरनृसिंहहनुमत्पूजनादिशनिवारकृत्यकथनं नामदशमोऽध्यायः॥ १०॥ ॥सनत्कुमारउवाच॥ वा
रव्रतानिसर्वाणित्वत्तोदेवश्रुतानिमे॥ तववागमृतंपीत्वातृप्तिर्मेनैवजायते॥ १॥ श्रावणेनसमोमासोनास्त्यन्यः प्रतिभातिमे॥ अथा
तस्तिथिमाहात्म्यंकथयस्वजगत्प्रभो॥ २॥ ॥ईश्वरउवाच॥ ॥मासानांकार्तिकःश्रेष्ठस्तस्मान्माघःपरोमतः॥ ततोऽपि
माधवःश्रेष्ठः सहश्चापिहरिप्रियः॥ ३॥ विश्वरूपेणचत्वारोमासाश्चैतेममप्रियाः॥ द्वदशस्वपिमासेषुश्रावणःशिवरूपतः॥ ४॥ ति
थयःश्रावणेमासिसर्वाश्चव्रतसंयुताः॥ प्राधान्यतस्तथापित्वांवच्मिकाश्चित्सुशोभनाः॥ ५॥ तिथिवारवि मिश्रंतुव्रतमाद्यंवदा-
मिते॥ प्रतिपच्छ्रावणेमासियदासामसंयुताभवेत्॥ ६॥ सोमवारास्तदापंचपतंत्यत्रहिमासिके॥ रोटकारव्यंव्रतंतत्रकर्तव्यंश्रावणे
नरैः॥ ७॥ सार्द्धमासत्रयंवापिरोटकारव्यंव्रतंभवेत्॥ लक्ष्मीवृद्धिकरंप्रोक्तंसर्वकामार्थसिद्धिदम्॥ ८॥ विधानंतस्यवक्ष्यामिशृणुष्वाव
हितोमुने॥ श्रावणस्यसितेपक्षेप्रतिपत्सोमवासरे॥ ९॥ प्रातःसंकल्पयेद्विद्वान्करिष्येरोटकव्रतम्॥ अद्यारभ्यसुरश्रेष्ठकृपांकुरुज
गद्गुरो॥ १॥ दिनेदिनेप्रकर्तव्यापूजादेवस्यशूलिनः बिल्वपत्रैरखंडैश्चतुलसीपत्रकैस्तथा॥ १०॥ नीलोत्पलैश्चकमलैःकल्हारैःकुसु- १८

दैस्तया ॥ चंपकैर्मालतीपुष्पैः कुविंदैरर्कपुष्पकैः ॥ ११ ॥ अन्यैर्नानाविधैः पुष्पैर्ऋतुकालोद्भवैः शुभैः ॥ धूपैर्दीपैश्च नैवेद्यैः फलैर्नाना
विधैरपि ॥ १२ ॥ नैवेद्यमर्पयेत्सुरव्यं रोटकानां विशेषतः ॥ कर्तव्या रोटकाः पंचपुरुषाहारमानतः ॥ १३ ॥ द्वौ तु विप्राय दातव्यौ द्वाभ्यां
च भोजनं मतम् ॥ एको देवाय दातव्यो नैवेद्यार्थं सदा बुधैः ॥ १४ ॥ शेषपूजां विधायाथ अर्घ्यं दद्याद्विचक्षणः ॥ रंभाफलं नारिकेलं जं
बीरं बीजपूरकम् ॥ खर्जूरीकर्कटीद्राक्षानारिंगं मातुलिंगकम् ॥ अक्षोटकं च दाडिंबं यच्चान्यदृतुसंभवम् ॥ १६ ॥ प्रशस्तमर्घ्यदाने
स्यात्तस्य पुण्यफलं शृणु ॥ सप्तसागरसंयुक्तां भूमिं दत्वा तु यत्फलम् ॥ १७ ॥ तत्फलं समवाप्नोति व्रतं कृत्वा विधानतः ॥ पंचवर्षप्रक
र्तव्यमतुलं धनमीप्सुभिः ॥ १८ ॥ पश्चादुद्यापनं कुर्याद्रोटकाख्यव्रतस्य तु ॥ उद्यापने तु कर्तव्यो हेमरूप्यौ च रोटकौ ॥ १९ ॥ पूर्वेद्युर
धिवास्याथ प्रातर्होमं समाचरेत् ॥ सर्पिषा शिवमंत्रेण बिल्वपत्रैश्च शोभने ॥ २० ॥ एवं कृते व्रते तान्सर्वान्कामानवाप्नुयात् ॥ स
नत्कुमार वक्ष्यामि द्वितीयायां व्रतं शुभम् ॥ २१ ॥ यत्कृत्वा च द्वयामर्त्यो लक्ष्मीवान्पुत्रवान्भवेत् ॥ औदुंबराभिधं चैतद्व्रतं पापप्रणा
शनम् ॥ २२ ॥ श्रावणे मासि संप्राप्ते द्वितीयायां शुभे तिथौ ॥ प्रातः संकल्प्य विधिवद्व्रतं कुर्याद्विचक्षणः ॥ २३ ॥ नारी वाथ नरो वा
पि पात्रं स्यात्सर्वसंपदाम् ॥ साक्षादुदुंबरः पूज्य स्तदभावे तु कुड्यके ॥ २४ ॥ लिखित्वा पूजयेत्तत्र चतुर्भिर्नाममंत्रकैः ॥ उदुंबर नमस्तु
भ्यं नमस्ते हेमपुष्पक ॥ २५ ॥ सजंतुफलयुक्ताय नमो रक्तांडशालिने ॥ नमोऽधिदेवते पूज्ये शिवः शुक्रस्तथैव च ॥ २६ ॥ त्रयस्त्रिंशत्क

लान्यस्य गृहीत्वाभागमाचरेत् ॥ एकादश ब्राह्मणाय दद्यात्तावंति दैवते ॥ २७ ॥ तावंति स्वयमश्नीयान्नान्नाहारस्तु तद्दिने ॥ शिवं शुक्रं
च संपूज्य रात्रौ जागरणं चरेत् ॥ २८ ॥ एवं कृत्वा व्रतं तात वर्षाण्येकादशैव तु ॥ पश्चादुद्यापनं कुर्याद्व्रतसंपूर्णहेतवे ॥ २९ ॥ उदुंबरः स्व
र्णेन फलपुष्पदलान्वितः ॥ तत्र संपूजयेद्विद्वान्प्रतिमे शिवशुक्रयोः ॥ ३१ ॥ प्रातर्होमं चरेच्चैव उदुंबरफलैः शुभैः ॥ कोमलैरल्पमानैश्च
संख्यया ऽष्टोत्तरं शतम् ॥ ३२ ॥ उदुंबरसमिद्भिश्च तिलैराज्यैश्च होमयेत् ॥ एवं समाप्य होमं तु आचार्यं पूजयेत्ततः ॥ ३३ ॥ ब्राह्मणान्भो
जयेत्पश्चाच्छतं शक्त्या दशा ऽथवा ॥ एवं व्रते न कृते वत्स फलं यत्तच्छृणुष्व तत् ॥ ३३ ॥ बहुजंतुफलो वृक्षो यथायं साधकस्तथा ॥ स्याद्वं
दनेकस्तनवान्वंशवृद्धिस्तथा भवेत् ॥ ३४ ॥ हेमपुष्पे यथा वृक्षस्तथा लक्ष्मीप्रदो भवेत् ॥ अद्यावधि न कस्यापि व्रतमेतत्प्रकाशितम् ॥
३५ ॥ गोप्याद्गोप्यतरं चैव वत्स वा ऽग्रे कथितं मया ॥ नैवात्र संशयः कार्यो भक्त्या चैतद्व्रतं चरेत् ॥ ३६ ॥ इति श्रीस्कंदपुराणे श्रावणमा-
समाहात्म्ये ईश्वरसनत्कुमारसंवादे प्रतिपद्व्रोटकव्रतं द्वितीयोदुंबरव्रतकथनं नामैकादशो ऽध्यायः ॥ ११ ॥ ॥ ईश्वर उवा
च ॥ ॥ अतः परं प्रवक्ष्यामि स्वर्णगौरीव्रतं शुभम् ॥ श्रावणे शुक्लपक्षे तु तृतीयायां विधानतः ॥ १ ॥ प्रातः स्नात्वा नित्यकर्म कृत्वा
संकल्पमाचरेत् ॥ पार्वतीशंकरौ पूज्यौ षोडशैरुपचारकैः ॥ २ ॥ देवदेव समागच्छ प्रार्थये ऽहं जगत्पते ॥ इमां मया कृतां पूजां गृहाण सु
रसत्तम ॥ ३ ॥ वायनानि प्रदेयानि दंपतीभ्यस्तु षोडश ॥ भवान्याश्च महादेव्या व्रतसंपूर्णहेतवे ॥ ४ ॥ प्रीतये द्विजवर्याय वायनं प्रददा

स्यहम् ॥ नानाषोडशपक्वान्नैर्वेणुपात्राणि षोडश ॥ ५ ॥ कुर्याद्दूर्वादिभिर्युक्तान्याहूय द्विजदंपतीन् ॥ व्रतसंपूर्णतार्थं तु ब्राह्मणेभ्यो ददाम्यहम् ॥ ६ ॥ स्वलंकृताः सुवासिन्यः पातिव्रत्येन भूषिताः ॥ मम कार्यसमृद्ध्यर्थं प्रतिगृण्हंतु शोभनाः ॥ ७ ॥ एवं षोडश वर्षाणि अथो चत्वारि वा पुनः ॥ एकवर्षं तु सद्यो वा कृत्वा चोद्यापनं चरेत् ॥ ८ ॥ पूजांते च कथां श्रुत्वा वाचकं संप्रपूजयेत् ॥ ९ ॥ ॥ सनत्कुमार उवाच ॥ ॥ केन चीर्णं व्रतमिदं माहात्म्यं चास्य कीदृशम् ॥ उद्यापनं कथं कार्यं तत्सर्वं वद मे प्रभो ॥ १० ॥ ॥ ईश्वर उवाच ॥ ॥ साधु पृष्टं महाभाग कथयामि तवाऽग्रतः ॥ स्वर्णगौरीव्रतं नाम सर्वसंपत्करं नृणाम् ॥ ११ ॥ पुरा सरस्वतीतीरे स्फ़ा विलारव्या महापुरी ॥ तत्र चंद्रप्रभो नाम राजासीत्स्वनदोपमः ॥ १२ ॥ तस्यास्तां रूपलावण्ये सौंदर्ये स्मरविभ्रमे ॥ महादेवी विशालाख्या द्विभार्यैकमलेक्षणे ॥ १३ ॥ तयोः प्रियतरा ज्येष्ठा तस्यासीन्नृपतेर्मता ॥ स कदाचिद्बहूनंभोजे मृगयासक्तमानसः ॥ १४ ॥ सिंहशार्दूलवाराहवनमाहिषकुंजरान् ॥ हत्वा बभ्राम तृष्णार्तः स राजा विपिनं महत् ॥ १५ ॥ चक्रकारंडवाकीर्णं चंचरीकपिकाकुलम् ॥ उत्फुल्लमल्लिकाजातिकुमुदोत्पलमंडितम् ॥ १६ ॥ अपूर्वामटवीं सोसौ ददर्शाऽप्सरसां सरः ॥ समासाद्य सरस्तीरं पीत्वा जलमनुत्तमम् ॥ १७ ॥ पत्न्या गौरीमर्चयंतं ददर्शाप्सरसां गणम् ॥ किमेतदिति पप्रच्छ राजा राजीवलोचनः ॥ १८ ॥ स्वर्णगौरीव्रतमिदं क्रियतेऽस्माभिरुत्तमम् ॥ सर्वसंपत्करं नृणां तत्कुरुष्व नृपोत्तम ॥ १९ ॥ ॥ राजोवाच ॥ ॥ विधानं कीदृशं ब्रूत किं फलं विस्तरान्मम ॥ नाऊचुर्योषि-

तःसर्वास्तृतीयायांनभोयुजि॥२०॥कर्तव्यंव्रतमेतद्धिस्वर्णगौरीतिसंज्ञितम्॥पार्वतीशंकरौपूज्यौभक्त्यापरमयामुदा॥२१॥दोरकं
षोडशगुणंबध्नीयाद्दक्षिणेकरे॥नरोवामेतुनारीणांगलेवाबंधनंमतम्॥२२॥तंकृत्वासोऽपिजग्राहव्रतंनियतमानसः॥गुणैःषोड
शभिर्युक्तंदोरकंदक्षिणेकरे॥बध्नामिदेवदेवेशिप्रसादंकुरुमेवरम्॥एवंदेव्याव्रतं कृत्वाआजगामनिजंगृहम्॥२३॥पप्रच्छदो
रकंहस्तेदृष्ट्वाज्येष्ठातिकोपना॥त्रोटयित्वाचचिक्षेपबाह्यशुष्कतरूपरि॥२५॥नकर्तव्यंनकर्तव्यमितिनिराङ्गिषद्त्यपि॥तेनसंस्प
ष्टमात्रेणतरुःपल्लवितोऽभवत्॥२६॥तद्द्वितीयाननोदृष्ट्वाविस्मयाकुलिताऽभवत्॥तरुस्थंदोरकंछिन्नंगृहीत्वासावबंधह॥
२७॥ततस्तन्मासमाहात्म्यात्सस्तुःप्रियतराऽभवत्॥ज्येष्ठाव्रतापचारेणसात्यक्त्वादुःखितावनम्॥२८॥प्रययौसामहादेवीं
ध्यायंतीमनसाचह॥मुनीनामाश्रमेपुण्येनिवसंतीक्वचित्क्वचित्॥२९॥निवारितामुनिवरैर्गच्छपापेयथासुखम्॥धावंतीवि
पिनेघोरंनिर्विण्णानिषसादह॥३०॥ततस्तत्कृपयादेवीप्रादुरासीत्तदायतः॥तांदृष्ट्वा दंडवद्भूमौनत्वास्तुत्वानृपप्रिया॥३१
जयदेविनमस्तुभ्यंजयभक्तवरप्रदे॥जयशंकरवामांगेजयमंगलमंगले॥३२॥ततोभक्त्यावरंलब्ध्वागौरीमभ्यर्च्ययद्व्रतम्॥
चक्रेतस्यप्रभावेनभर्त्रातांचानयद्गृहम्॥३३॥ततोदेव्याःप्रसादेनसर्वान्कामानवापसा॥ततस्ताभ्यांनृपोराज्यंचक्रेसर्वसमृद्धि
मान्॥३४॥अंतेशिवपदंप्राप्यकांताभ्यांसहितोनृपः॥३५॥यःशोभनंव्रतमिदंकुरुतेशिवायाःकुर्यान्ममप्रियतरोभविताचगौ

र्याः॥ प्राप्यश्रियंसमधिकं क्रविशत्रुसंघंनिर्जित्यनिर्मलपदंसशिवस्ययानि॥३६॥एतस्योद्यापन विधिंसावधानमनाःशृणु॥शुभे
तिथौ शुभेवारेचंद्रेताराबलान्विते॥३७॥मंडपेऽष्टदलेपद्मेकुंभंधान्योपरिन्यसेत्॥पूर्णपात्रंताम्रमयंपलषोडशनिर्मितम्॥३८
तिलपूर्णंतत्रदेवींशंकरप्रतिमेन्यसेत्॥श्वेतवस्त्रयुगच्छन्नंश्वेतयज्ञोपवीतिनम्॥३९॥वेदोक्तेनप्रतिष्ठाचकर्तव्यातुयथाविधि॥
सम्यक्पूजांतुसंपाद्यरात्रौजागरणंचरेत्॥४०॥प्रातःपूजांततःकृत्वाततोहोमंसमाचरेत्॥ग्रहहोमंपुराकृत्वाप्रधानंजुहुयात्त
तः॥४१॥तिलाश्चयवसंमिश्रा आज्येनचपरिप्लुताः॥द्रव्यप्रधानेसंख्यातुसहस्रमथवाशतम्॥४२॥आचार्यंपूजयेत्पश्चाद्वस्त्रा
लंकारधेनुभिः॥वायनानिचदद्यानिब्राह्मणांश्चैवभोजयेत्॥४३॥दंपतीभोजयेच्चैवसंख्ययाषोडशैवतु॥भूयसींदक्षिणांदद्या
त्स्वस्यवित्तानुसारतः॥बंधुभिःसहभुंजीतहर्षोत्सवसमन्वितः॥४५॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमा
समाहात्म्येतृतीयायांस्वर्णगौरीव्रतकथनंनामद्वादशोऽध्यायः॥ १२॥ ॥सनत्कुमारउवाच॥ ॥केनव्रतेनभगवन्सौ
भाग्यमतुलंभवेत्॥पुत्रपौत्रधनैश्वर्यंमनुजःकस्वमेधते॥तन्मेवदमहादेवव्रतानामुत्तमव्रतम्॥१॥ ॥ईश्वरउवाच॥ ॥
अस्तिदूर्वागणपतेर्व्रतंत्रैलोक्यविश्रुतम्॥भगवत्यापुराचीर्णंपार्वत्याश्चद्वयासह॥२॥सरस्वत्यामहेंद्रेणविष्णुनाधनदेनच॥अ
न्यैश्चदेवैर्मुनिभिर्गंधर्वैःकिंनरैस्तथा॥चीर्णमेतद्व्रतंसर्वैःपुरात्र मुनिसत्तम॥३॥चतुर्थ्यांयाभवेच्छुक्लानभोमासिसपुण्यदा॥त

श्राम्भा॰ स्यांव्रतमिदंकुर्यात्सर्वपापौघनाशनम् ॥ ४ ॥ गजाननंचतुर्थ्यांतु एकदंतविपाटितम् ॥ विधायहेम्नाविघ्नेशंहेमपीठासनेस्थितम् ॥ अ॰
२१ ५ ॥ नदाहेममर्यादूर्वांतदाधारेव्यवस्थितम् ॥ संस्थाप्यविघ्नहर्तारं कलशेताम्रभाजनम् ॥ ६ ॥ वेष्टितंरक्तवस्त्रेणंसर्वतोभद्रमंड- १३
ले ॥ पूजयेद्रक्तकुसुमैः पत्रिकाभिश्चपंचभिः ॥ ७ ॥ अपामार्गशमीदूर्वातुलसीबिल्वपत्रकैः ॥ अन्यैः सुगंधैःकुसुमैर्यथालब्धैः सु
गंधिभिः ॥ ८ ॥ फलैश्चमोदकैःपश्चादुपहारंप्रकल्पयेत् ॥ यथावदुपचारैश्चपूजयेद्गिरिजासुतम् ॥ ९ ॥ प्रतिमायांस्वर्णमय्यांनिर्मिता
यांयथाविधि ॥ आवाहयामिविघ्नेशमागच्छतुकृपानिधिः ॥ १० ॥ रत्नवद्धमिदंहैमंसिंहासनमनुत्तमम् ॥ आसनार्थमिदंदत्तंप्रतिगृ-
ण्ह्यातुविघ्नराट् ॥ ११ ॥ उमासुतनमस्तुभ्यं विश्वव्यापिन्सनातन ॥ विघ्नौघंछिंधिसकलंममपाद्यंददामिते ॥ १२ ॥ गणेश्वरायदेवा-
यउमापुत्रायवेधसे ॥ अर्घ्यमेतत्प्रयच्छामिगृहाणभगवन्मम ॥ १३ ॥ विनायकायशूरायवरदायनमोनमः ॥ इदमाचमनीयंतेद-
दामिप्रतिगृह्यताम् ॥ १४ ॥ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतम् ॥ स्नानार्थंतेमयादत्तंगृहाणसुरपुंगव ॥ १५ ॥ सिंदूरेणयथाल-
ब्धंकुंकुमैरंजितंमया ॥ वस्त्रयुग्ममिदंदत्तंप्रतिगृण्हनमोस्तुते ॥ १६ ॥ लंबोदरायदेवायसर्वविघ्नापहारिणे ॥ उमांगमलसंभूतच्चं-
दनंप्रतिगृह्यताम् ॥ १७ ॥ अक्षताश्चसुरश्रेष्ठ रक्तचंदनचर्चिताः ॥ मयानिवेदिताभक्त्यागृहाणसुरसत्तम ॥ १८ ॥ चंपकैःकेतकीप २१
त्रैर्जपाकुसुमसंघकैः ॥ गौरीपुत्रंपूजयामिप्रसीदतुममोपरि ॥ १९ ॥ अनुग्रहायलोकानांदानवानांवधायच ॥ अवतीर्णःस्कंदगुरु

धूपंगृणात्तुवैसुदा ॥२०॥ परंज्योतिःप्रकाशायसर्वसिद्धिप्रदायच ॥ दीपंतुभ्यंप्रदास्यामिमहादेवात्मनेनमः ॥२१॥ गणानांत्वेतिनैवेद्य-
मर्पयेन्मोदकादिकम् ॥ अन्नंचतुर्विधंचैवपायसंलड्डुकादिकम् ॥२२॥ कर्पूरैलादिसंयुक्तंनानावल्लीदलान्वितम् ॥ तांबूलंतेप्रदास्यामि-
मुखवासार्थमादरात् ॥२३॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ दक्षिणांतेप्रदास्यामिअतःशांतिंप्रयच्छमे ॥२४॥ गणेश्वर
गणाध्यक्षगौरीपुत्रगजानन ॥ व्रतंसंपूर्णतांयातुत्वत्प्रसादादिभानन ॥२५॥ एवंसंपूज्यविघ्नेशंयथाविभवविस्तरैः ॥ सोपस्करंगणा
ध्यक्षमाचार्यायनिवेदयेत् ॥२६॥ गृहाणभगवन्ब्रह्मन्गणराजंसदक्षिणम् ॥ एतत्त्वद्भवनादद्य पूर्णतां यातुमद्व्रतम् ॥२७॥ एवंयःपं
चवर्षाणिकृत्वोद्यापनमाचरेत् ॥ ईप्सिताल्लभतेकामान्देहांतेशांकरंपदम् ॥२८॥ यद्वावर्षत्रयंकुर्यात्सर्वसिद्धिमवाप्नुयात् ॥ उद्यापनं-
विनायकस्यकरोतिव्रतमुत्तमम् ॥२९॥ सर्वंनिष्फलतांयातियथाविध्यपियत्कृतम् ॥ उद्यापनदिनेप्रातस्तिलैःस्नानंसमाचरेत् ॥३०॥
हेम्नापलात्तदर्धार्धात्कृत्वागणपतिंबुधः ॥ पंचगव्यैस्ततःसंस्नाप्यदूर्वाभिस्तंप्रपूजयेत् ॥३१॥ मंत्रैस्तुदशभिर्भक्त्याश्रद्धयासहितोन
रः ॥ गणाधीशनमस्तुभ्यमुमापुत्राघनाशन ॥ विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक ॥ एकदंतेभवक्त्रेतितथामूषकवाहन ॥३३॥
कुमारगुरवेतुभ्यमितिनामपदैःपृथक् ॥ पूर्वेद्युरधिवासस्यैवप्रातर्होमंसमाचरेत् ॥३४॥ दूर्वाभिर्मोदकैश्चैवग्रहहोमपुरःसरं ॥ पूर्णाहु
तिंततोहुत्वाआचार्यादीन्प्रपूजयेत् ॥३५॥ गांसवत्सांघटोघ्नींचदद्याद्वित्तानुसारतः ॥ एवंकृतेव्रतेवत्ससर्वान्कामानवाप्नुयात् ॥३६॥

श्रा॰मा मदीयप्रियपुत्रस्यव्रतेनाहंचतोषितः॥भुविदत्वासर्वभोगंददाम्यंतेचसद्गतिम्॥३७॥यथाशाखाप्रशाखाभिर्दूर्वाहिवृद्धिगताभवेत्॥ अ॰
२२ तथैवपुत्रपौत्रादिसंततिर्वृद्धिगामिनी॥३८॥इत्येतत्कथितंगुह्यंदूर्वागणपतिव्रतम्॥श्रेष्ठाच्छ्रेष्ठतरंचैवकर्तव्यंसुखमीप्सुभिः॥३९॥ १४
इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येदूर्वागणपतिव्रतकथनंनामत्रयोदशोऽध्यायः॥१३॥ ॥ईश्व
रउवाच॥ ॥अतःपरंप्रवक्ष्यामिश्रावणेशुक्लपक्षके॥पंचम्यांयच्चकर्तव्यंतच्छृणुष्वमहामुने॥१॥चतुर्थ्यामेकभुक्तंतुनक्तंस्या
त्पंचमीदिने॥कृत्वास्वर्णमयंनागमथवारौप्यसंभवं॥२॥कृत्वादारुमयंवापिअथवामृन्मयंशुभम्॥पंचम्यामर्चयेद्भक्त्यानागंपंच-
फणान्वितम्॥३॥द्वारस्योभयतोलिख्यागोमयेनविषोल्बणाः॥पूजयेद्विधिवच्चैवदधिदूर्वांकुरैःशुभैः॥४॥करवीरैर्मालतीभिर्जाति
पुष्पैश्चचंपकैः॥तथागंधैरक्षतैश्चधूपैर्दीपैर्मनोहरैः॥५॥ब्राह्मणान्भोजयेत्पश्चात्घृतमोदकपायसैः॥अनंतंवासुकिंशेषंपद्मना
भंचकंबलम्॥६॥तथाकर्कोटकंनागंनागमश्वंतथाऽष्टमम्॥धृतराष्ट्रंशंखपालंकालीयंतक्षकंतथा॥७॥हरिद्रयाचंदनेनकुड्ये-
नागकुलाधिपान्॥नवकंडूंश्चसंलिख्यपूजयेत्कुसुमादिभिः॥८॥वल्मीकेपूजयेन्नागान्दुग्धंचैवतुपाययेत्॥घृतयुक्तंशर्कराढ्यं
यथेष्टंचार्पयेद्बुधः॥९॥लोहपात्रेपोलिकादिनकुर्यात्तद्दिनेनरः॥गोधूमपायसंकुर्यान्नैवेद्यार्थंतुभक्तितः॥१०॥भर्जिताश्चणकाश्चै
वव्रीहयोयावनालकाः॥अर्पणीयाश्चसर्पेभ्यःस्वयंचैवतुभक्षयेत्॥११॥बालकेभ्योऽर्पणीयाश्चदृढादंताभवंतिहि॥वल्मीकस्य- २२

समीपेनुगायनंवाद्यमेवच॥ स्त्रीभिः कार्यंभूषिताभि ःकार्यश्चैवोत्सवोमहान्॥ एवंकृतेकदाचिच्चसर्पतोनभयंभवेत्॥१३॥ अन्यच्च
शृणुयाहिप्रलोकानांहितकाम्यया॥ कथयिष्यामिकिंचित्तेतच्छृणुष्वमहामुने॥१४॥ नागदष्टोनरोवत्सप्राप्यमृत्युंव्रजत्यधः॥ अधो
गत्वाभवेत्सर्पस्तामसोनात्रसंशयः॥१५॥ पूर्वोक्तविधिनासर्वमेकभक्तादिकारयेत्॥ नागनिर्माणपूजादिविप्रमुक्तंतथादरात्॥१६
एवंद्वादशमासेषुमासिमासिव्रतंचरेत्॥ पंचम्यांशुक्लपक्षस्यपूर्णेसंवत्सरेपुनः॥१७॥ ब्राह्मणांश्चयतींश्चैवनागानुद्दिश्यभोजयेत्॥
इतिहासविदेनागंकांचनंरत्नचित्रितम्॥१८॥ गांचदद्यात्सवत्सांवैसर्वोपस्करसंयुताम्॥ दानकालेपठेदेतत्स्मरंन्नारायणंविभुम्॥१९
सर्वगंसर्वदातारमनंतमपराजितम्॥ येकेचिन्मेकुलेसर्पदष्टाःप्रामाह्यधोगतिम्॥२०॥ व्रतदानेनगोविंदमुक्तिभाजोभवंतुते॥ इक्षु
च्चार्याःक्षतैर्युक्तंसितचंदनमिश्रितम्॥२१॥ वासुदेवाग्रतोभक्त्यातोयेनार्घंविनिक्षिपेत्॥ अनेनविधिनासर्वेयमरिष्यंतिषामृताः॥
२२॥ सर्पतस्तेभियास्यंतिस्वर्गतिंमुनिसत्तम॥ एवंसर्वान्समुत्सृत्यकुलजान्कुलनंदन ॥२३॥ प्रयातिशिवसान्निध्यंसेव्यमानोप्स
रोगणैः॥ वित्तशाठ्यविहीनोयःसर्वमेतत्फलंलभेत्॥२४॥ नक्तेनभक्तिसहिताःसितपंचमीषुयेपूजयंतिसुभगास्कुसुमोपहारैः॥ ते
षांगृहेष्वभयदाहिभवंतिसर्पाहर्षान्विताम्मणिमयूखविभासितांगाः॥२५॥ प्रतिग्रहंयेचकुर्युर्ग्रहदानस्यबाडवाः॥ प्रयांतिसर्पतांतेऽ
पिघोरांभुक्त्वातुयातनां॥२६॥ अंतकालेचयेकेचिन्नागहत्यावशादिह॥ मृतापत्याअपुत्रावाभवंतिमुनिसत्तम॥२७॥ कार्पण्य-

श्रा॰मा॰ वशतःस्त्रीणांसर्पतांयांतिकेचन ॥ निक्षेपानृतवादाच्चकेचित्सर्पाभवंतिहि ॥ २८ ॥ अन्यैश्चापिनिमित्तैर्येसर्पतांयांतिमानवाः ॥ उ अ॰
२३ पायोऽयंविनिर्दिष्टःसर्वेषांनिष्कृतौपरः ॥ २९ ॥ वित्तशाठ्यविहीनेनकृताचेन्नागपंचमी ॥ तन्हितार्थंहरिःशेषःसर्वनागाधिपोविभुः ॥ ३० १४
॥ बद्धांजलिःप्रार्थयतेवासुकिश्चसदाशिवम् ॥ शेषवासुकिविज्ञप्त्याशिवविष्णूप्रसादिनौ ॥ ३१ ॥ मनोरथांस्तस्यसर्वान्कुरुतःपरमे
श्वरौ ॥ नागलोकेतुतान्भोगान्भुक्त्वातुविविधान्बहून् ॥ ३२ ॥ ततोवैकुंठमासाद्यकैलासंवापिशोभनम् ॥ शिवविष्णुगणोभूत्वा-
लभतेपरमंसुखम् ॥ ३३ ॥ एतत्तेकथितंवत्सनागानांपंचमीव्रतम् ॥ अतःपरंकिमन्यत्त्वंश्रोतुमिच्छसितद्वद ॥ ३४ ॥ इतिश्रीस्कंदपुरा
णेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येनागपंचमीव्रतकथनंनामचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ सनत्कुमारउवाच ॥
श्रुतमाश्चर्यजनकंनागानांपंचमीव्रतम् ॥ षष्ठ्यांकथयदेवेशकिंव्रतंकीदृशोविधिः ॥ १ ॥ ॥ ईश्वरउवाच ॥ ॥ शुक्लपक्षेश्रा
वणेतुषष्ठ्यांकार्यंव्रतंशुभम् ॥ सूपौदनाख्यंविप्रेंद्रमहामृत्युविनाशनम् ॥ २ ॥ शिवालयेगृहेवापिशिवंसंपूज्ययत्नतः ॥ सूपौदनस्यनैवे-
द्यमर्पयेद्विधिसंयुतः ॥ ३ ॥ आम्रस्यलवणंशाकंसाधनंपरिकल्पयेत् ॥ नैवेद्यस्यपदार्थैस्तुवायनंब्राह्मणस्यच ॥ ४ ॥ यएतद्विधिनाकु
र्यात्तस्यपुण्यमनंतकम् ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ ५ ॥ राजासीद्रोहितोनामबहुकालमपुत्रवान् ॥ पुत्रार्थीसतपश्चक्रे
महत्परमदारुणम् ॥ ६ ॥ प्रारब्धेनास्तितेपुत्रोबोधितोऽपिसमेधसा ॥ निर्बंधान्ननिवृत्तोभूत्तपसःसोतिलालसः ॥ ७ ॥ ततःसंकटमाप- २३

न्नो वेधाः प्रादुरभूत्सुनः ॥ पुत्रो दत्तस्तव मया अल्पायुः स भविष्यति ॥ ८ ॥ पत्नी राजा मंत्रयेत्तां वंध्यात्वं तु गमिष्यति ॥ अपुत्रत्वापवादश्च
अलमित्येव जायतां ॥ ९ ॥ ततो ब्रह्मवरात्पुत्रो हर्षशोकपरोऽभवत् ॥ जातकर्मादिसंस्काराश्चक्रे राजा यथाविधि ॥ ११ ॥ राज्ञी सा दक्षि
णा नाम राजा चैव सरोहितः ॥ शिवदत्त इति प्रेम्णा चक्रतुर्नाम तस्य तौ ॥ १ ॥ उपनीतश्च तनयो राज्ञा तु भयचेतसा ॥ विवाहं न चकारास्य
भूमिपालो मृतेर्भयात् ॥ १२ ॥ न दा षोडशवर्षे सो मरणं प्राप पुत्रकः ॥ चिंतामाप परां राजा ब्रह्मचारि मृतिं स्मरन् ॥ १३ ॥ येषां कुले ब्रह्मचारि
निधनं प्राप्नुयाद्यदि ॥ न तु कुलं क्षयमायाति सोऽपि दुर्गतिमापतेत् ॥ १४ ॥ ॥ सनत्कुमार उवाच ॥ ॥ देवदेव जगन्नाथ परि-
हारोऽस्ति वा न वा ॥ अस्ति चेच्च वदस्वाद्य दोषशांतिर्यथा भवेत् ॥ १५ ॥ ॥ ईश्वर उवाच ॥ ॥ स्नातको ब्रह्म चारी च निध
नं प्राप्नुयाद्यदि ॥ संयोज्य चाऽर्कविधिना संयोज्यो तौ ततः परम् ॥ १६ ॥ देशकालौ तु संकीर्त्य अमुकगोत्रादि नाम तः ॥ व्रतं वैसर्गिकं कुर्वे-
मृतस्य ब्रह्मचारिणः ॥ १७ ॥ हेम्नाऽप्युदयिकं कृत्वा प्रतिष्ठाप्य च पावकम् ॥ आघारांतं च संपाद्य चतुर्व्याहृतिभिर्हुनेत् १८ ॥ व्रतपत्न्यु-
ग्नये चैव व्रतानुष्ठानसत्फलम् ॥ संपादनाय विश्वेभ्यो देवेभ्यश्च हुनेद्धुतम् ॥ १९ ॥ ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ देशकालौ
पुनः स्मृत्वा करिष्येऽर्कविवाहकम् ॥ २० ॥ हेम्नाऽप्युदयिकं कृत्वा अर्कशाखां शवं तथा ॥ लिप्त्वा तैलहरिद्राभ्यां पीतसूत्रेण वेष्टयेत्
॥ २१ ॥ पीतवस्त्रयुगेनापि अग्निं संस्थापयेत्ततः ॥ आघारांतेऽग्नये चैव विवाहविधियोजकम् ॥ २२ ॥ बृहस्पतये कामाय चतुर्व्याहृतिभि-

स्तथा ॥ आज्यंस्विष्टकृतंहुत्वाकर्मचैवसमापयेत् ॥ २३ ॥ अर्कशारवांशवंचैवदाहयेच्चयथाविधि ॥ मृतस्यम्रियमाणस्यषडब्दंव्रत-
माचरेत् ॥ २४ ॥ त्रिंशद्भ्योब्रह्मचारिभ्योदद्यात्कौपीनकान्नवान् ॥ हस्तमात्राःकर्णमात्रादद्यात्कृष्णाजिनानिच ॥ २५ ॥ पादुकाछत्र-
माल्यानिगोपीचंदनमेवच ॥ मणिप्रवालमाल्यंचभूषणानिसमर्पयेत् ॥ २६ ॥ एवंकृतेविधानेचविघ्नःकोपिनजायते ॥ ॥ ईश्व
रउवाच ॥ ॥ एवंश्रुत्वाब्राह्मणेभ्योराजाहृद्य विचारयत् ॥ २७ ॥ भानिमेऽकंविवाहोऽयमनुकल्पोनसुखकः ॥ नददातिप्र
मीतस्यकन्यांकश्चिद्वधूयनः ॥ २८ ॥ अहंराजाऽस्मिप्रददेरत्नानिचधनंबहु ॥ ददामितस्मैयःकश्चिद्दास्यतेऽस्यवधूंयदि ॥ २९ ॥ विप्रः
कश्चित्पुरेतस्मिन्नासीद्देशांतरंगतः ॥ तस्यपूर्वमृतायास्तुभार्यायाःकन्यकाशुभा ॥ आसीद्द्वितीयाभार्यातुदुष्टाचित्ताविचारयत् ॥
सपत्नीद्वेषतश्चाऽपिबहुद्रव्यस्यलोभतः ॥ ३१ ॥ दशवर्षातुसाबालादीनामातृवशंगता ॥ सापत्नमातासालक्षंगृहीत्वाप्रददौसुतां ॥
३२ ॥ कन्यांगृहीत्वाजस्मुस्तेस्मशानंसरितस्तटे ॥ विवाहंचक्रुतुश्चैवशवेनसहकन्यकाम् ॥ ३३ ॥ भोजयित्वाविधानेनदग्धुंसमुपचक्रमुः
॥ ततःसाकन्यकाऽपृच्छत्किमिदंक्रियतेजनाः ॥ ३४ ॥ ततस्तेदुःखिताःसर्वेप्रोचुर्मृतयाबधूम् ॥ ततःप्रोवाचसाभीतारुदंतीबालभाव
नः ॥ ३५ ॥ पतिंकिंदह्यतेमेऽसौदग्धुंनैवददाम्यहम् ॥ गच्छध्वंसहिताःसर्वेतिष्ठाम्यत्राहमेकिका ॥ ३६ ॥ पत्यासहगमिष्यामिउत्तिष्ठ-
तियदाह्यसौ ॥ दृष्ट्वातस्यास्तुनिर्बंधंकरुणार्दीनचेतसः ॥ ३७ ॥ प्रारब्धवादिनोद्वंद्वाःकेचित्तत्रैवमूर्छिरे ॥ अहोकिंवाभाविकर्म-

ज्ञायतेनैवकस्यचित् ॥ ३८ ॥ दीनपालःकृपालुश्चभगवान्किंकरिष्यति ॥ निराश्रिताच्चकन्येयंमात्रासापत्न्यभावतः ॥ ३९ ॥ विक्रीतास्या
दत्तोदेवःकदाचित्पालकोभवेत् ॥ अतोऽस्माभिरशक्येयंदग्धुंचाऽयंतथाश्रवः ॥ ४० ॥ अतोऽस्माभिश्चगंतव्यंसर्वेषांरोचतेयदि ॥ संमंत्र्यै
वंतुसर्वेपिगतास्तेनगरंप्रति ॥ ४१ ॥ सैकाशिवंपार्वतींचस्मरंतीभयविह्वला ॥ अजानंतीबालभावात्किमेतदितिविह्वला ॥ ४२ ॥ तस्याःसं
स्मरणाद्देव्याःसर्वज्ञौपार्वतीशिवौ ॥ करुणापूर्णहृदयौतत्राजग्मतुरंजसा ॥ ४३ ॥ वृषारूढौतुतौदृष्ट्वादंपतीतेजसांनिधी ॥ ननामदंडवद्भू
मौनजानंत्यपिदेवते ॥ ४४ ॥ आश्वासनंपरंलेभे आगतासंगतिस्त्विति ॥ उवाचचपतिःकिमेजातोनैवजायते ॥ ४५ ॥ प्रसन्नौबालभा
वेनदययाचपरिप्लुतौ ॥ ऊचतुस्तेजनन्यास्तुव्रतंसूपोदनाभिधम् ॥ ४६ ॥ व्रतंसंकल्प्यसतिलंगृहीत्वाऽप्यप्रयच्छमे ॥ ब्रूहियन्मज्जनन्या
स्तिव्रतंसूपोदनाभिधम् ॥ ४७ ॥ कृतंतस्यप्रभावेणउत्तिष्ठतुपतिर्मम ॥ तयाकृतंतथासर्वंशिवदत्तस्तथोत्थितः ॥ ४८ ॥ उपदिश्यव्रतंतं
स्यास्तदांतर्दधतुःशिवौ ॥ शिवदत्तस्तपप्रच्छकालंकेहागतोऽस्म्यहम् ॥ ४९ ॥ साचाहकिंचिद्वृत्तांतंरात्रिश्चापिगताऽभवत् ॥ प्रातर्न-
दीतीरगताजनाराज्ञेन्यवेदयन् ॥ ५० ॥ राजन्पुत्रःस्नुषाचैवनदीतीरेऽवतिष्ठतः ॥ प्रामाणिकेभ्यःश्रुत्वासोहर्षल्लोकोत्तरंययौ ॥ ५१ ॥
हर्षभेरीवादयन्सनदीतीरेसमाययौ ॥ जनाश्चमुदिताःसर्वेप्रशशंसुर्जनाधिपम् ॥ ५२ ॥ राजन्मृतःकालगृहात्पुत्रस्तेपुनरागतः ॥ प्र
शशंसस्नुषांराजाकिमहंशस्यतेजनैः ॥ ५३ ॥ दूरदृष्टोऽधमश्चाहंधन्येयंसुभगास्नुषा ॥ एतत्पुण्यप्रभावेणपुत्रोऽयंजीवितोमम ॥ ५४

श्रा॰मा॰ एवंस्तुषांसकसंभाव्यराजाब्राह्मणसत्तमान्॥पूजयामाससकमगैर्दानमानपुरःसरम्॥५५॥बहिर्नीतप्रमीतस्यपुनर्ग्रामप्रवेशने॥-
२५ · विधिंब्राह्मणसंदिष्टंशांतिकंविधिनाचरेत्॥५६॥एतत्तेकथितंवत्सव्रतंसूपोदनाभिधम्॥पंचवर्षाणिकृत्वैतत्पश्चादुद्यापनंचरेत्॥ अ॰ १६
५७॥प्रतिमांपार्वतीशस्यअर्चयेत्प्रतिवासरे॥प्रातर्होमंप्रकुर्वीतचरुणाश्मदलैस्तथा॥५८॥नैवेद्यंवायनंचैवव्रतोक्तविधिनाचरेत्॥
पुत्रंचिरायुषंलब्ध्वाअंतेशिवपुरंव्रजेत्॥५९॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येसूपोदनषष्ठीव्रतक
थनंनामपंचदशोऽध्यायः॥ १५॥ ॥ईश्वरउवाच॥ ॥इतःपरंप्रवक्ष्यामिशीतलासप्तमीव्रतम्॥श्रावणेशुक्लपक्षे
तुसप्तम्यामाचरेद्व्रतम्॥१॥कुड्येलिखित्वावापींतुतथासलिलदेवताः॥सप्तसंख्यादिव्यरूपाअशरीरिणिसंज्ञकाः॥२॥बालह्यस्यु
तानारीपुरुषत्रयसंज्ञिता॥अश्वश्ववृषभश्चैवशिबिकानरवाहना॥३॥पूजावार्देवतानांस्यात्षोडशैरुपचारकैः॥दध्योदनस्यनैवेद्यं-
साथनेकर्कटीफलम्॥४॥द्विजायवायनंदद्यान्नैवेद्यस्यपदार्थकैः॥सप्तवर्षाणिकृत्वैवंकृत्वासिन्यश्चसप्तवै॥५॥प्रत्यब्दंभोजनी-
याःस्युःपश्चादुद्यापनंचरेत्॥वार्देवतानांप्रतिमाएकस्मिन्स्वर्णपात्रके॥६॥बालेनसहिताःपूज्याःसायंपूर्वेऽन्हिभक्तिनः॥प्रातर्हो
मंचचरुणाग्रहहोमपुरःसरम्॥७॥व्रतमेतत्पुराचीर्णंफलितंचतथाशृणु॥सौराष्ट्रदेशेनगरमासीच्छोभनसंज्ञितम्॥तत्रासीद्धनि २५
कःकश्चित्सर्वधर्मपरायणः॥सवापींखानयामासनिर्जलेविजनेवने॥९॥पादमार्गांशुभांरम्यांबहुद्रव्यव्ययेनसः॥पशूनांजलपाना

यअपियोग्यांदद्म्यहम् ॥१०॥ बत्स्यांचिरस्थापिनींचबहिःप्रांतेद्रुमैर्युतं ॥ आरामंकारयामासश्रांतपांथसुखायच ॥११॥ परंशुष्कं-
जलंतत्रनलब्धंबिंदुमात्रकम् ॥ प्रयासोमेवृथाजातोद्रव्यंचव्ययितंवृथा ॥१२॥ इतिचिंतापरश्चासीद्वणिकोधनदाभिधः ॥ रात्रौतत्रैवसु-
स्वापस्वप्नेतंजलदेवता ॥१३॥ आगत्यकथयामासशृणूपायंजलागमे ॥ दास्यसेयदितेपौत्रंबलिमस्माकमादृतः ॥१४॥ तदैववापिके-
यंतेजलपूर्णाभविष्यति ॥ दृष्ट्वैवगृहमागत्यपुत्रायकथयद्धनी ॥१५॥ द्रविणोनामतत्पुत्रःसोपिधर्मपरायणः ॥ शृणुष्वममवत्सस्य-
भवान्मज्जनकोयतः ॥ तत्राप्येतद्धर्मकार्यंकिंविचार्यमिहत्वया ॥ स्थावरश्चास्तिधर्मोऽयंनश्वरंचसुतादिकम् ॥१७॥ अल्पमौल्यंम-
हावस्तुलाभोऽयंदुर्लभःक्रयः ॥ शीतांशुश्चैवचंडांशुर्वर्तेतेतनयौमम ॥१८॥ शीतांशुर्नामज्येष्ठोऽयंबलिर्देयोविचारतः ॥ मंत्रोयंसु-
वेयास्त्रीभिर्ज्ञातव्योनैवभाषितः ॥१९॥ उपायस्तत्रमत्पत्नीगर्भिणीवर्ततेऽधुना ॥ आसन्नप्रसवाचैवगंताऽसौस्वपितुर्गृहे ॥२०॥
प्रसूत्यर्थंकनिष्ठोऽसौतयासहगमिष्यति ॥ तदाकार्यमिदंतातनिर्विघ्नेनभविष्यति ॥२१॥ इतिश्रुत्वापुत्रवाक्यंपितातंसंतुतोषह ॥
धन्योऽसिपुत्रधन्योऽहंत्वयापुत्रेणपुत्रवान् ॥२२॥ एतस्मिन्नंतरेतस्याःसुशीलायाःपितुर्गृहात् ॥ आकारणंसमगमत्तदासाचजग-
मह ॥२३॥ ज्येष्ठोऽस्माकंसमीपस्थःकनिष्ठोनीयतांत्वया ॥ सातथैवसतीचक्रेभर्तृश्वशुरवाक्यतः ॥२४॥ तदानीपुत्रपितरौतैलेनाऽ-
भ्यज्यबालकम् ॥ स्नापयित्वासुवस्त्रैश्चभूषणैःसमलंकृतम् ॥२५॥ पूर्वाषाढावारुणर्क्षेस्थापयामासतुर्मुदा ॥ वाप्यांवादेवतास्तु

भ्रा·मा· स्नाप्नवंत्स्वितिसमूचतुः ॥२६॥ नदेववापीपूर्णाऽभूत्क्षधातुल्येनवारिणा ॥ उभौगृहंजग्मतुस्तौहर्षशोकसमन्वितौ ॥२७॥ सासुशी अ·
२६ लापितुर्गेहंस्नुतपुत्रंतृतीयकं ॥ मासत्रयोत्तरंगेहान्निजंगंतुंचनिर्गता ॥२८॥ वापीसमीपंप्राप्तासौवापींपूर्णांददर्शह ॥ विस्मयंपरमंप्रा १६
प्तत्रस्नानंचकारह ॥२९॥ श्वशुरस्यप्रयासोमेसार्थकश्चधनव्ययः ॥ तद्दिनेसप्तमीचासीच्छ्रावणेशुक्लपक्षके ॥३०॥ सुशीलायाव्रतं
चासीच्छीतलासंज्ञितंशुभम् ॥ सानन्नपाकमकरोदोदनंचानयद्दधि ॥३१॥ वार्देवताश्चसंपूज्यदध्यन्नंकर्कटीफलम् ॥ नैवेद्यंकल्पया
मासदत्त्वाविप्रायवायनम् ॥३२॥ स्वयंतदेवबुभुजेसहितासहवासिभिः ॥ ततोयोजनमात्रेतुतस्याग्रामोबभूवह ॥३३॥ ततःसानिर्ग
ताचासीदारुह्यशिबिकांशुभाम् ॥ बालकद्वयसंयुक्तातदासाजलदेवता ॥३४॥ ऊचुःपरस्परंचास्याःपुत्रोद्दीपायनोऽनया ॥ अस्मा
कंव्रतमाचीर्णंप्रज्ञात्वविहितापरा ॥३५॥ एनद्भुतप्रभावेणनूतनोदीयतेक्षतः ॥ पूर्वंजातोयदिग्राह्योह्यस्मत्तोषस्यकिंफलम् ॥३६॥
विसर्जयामासुरितिउक्त्वाऽन्योन्यंदयालवः ॥ मानरंदर्शयामासुर्वाप्यांनिष्कास्यबाह्यतः ॥३७॥ अधावत्स्पृष्टतोमातुर्मातरित्याह्व
यन्शिशुः ॥ संश्रुत्यपुत्रशब्दंसापराप्टत्याऽवलोकयत् ॥३८॥ दृष्ट्वासानंदनंस्वीयंचकितासाऽभवद्धृदि ॥ स्थाप्यांकेमूर्ध्न्यवघ्राय
किंचित्पप्रच्छनोक्तनम् ॥३९॥ विमेष्यतीतिबुद्ध्यासात्हृदयेत्वन्वचिंतयत् ॥ तस्करैर्यदिवानीतस्तद्धलंकारवान्कथम् ॥४०॥ पि- २६
शाचैर्यदिवानीतोमोक्षितश्चपुनःकथम् ॥ चिंतासमुद्रमग्नाऽस्युर्गृहसंबंधिनोजनाः ॥४१॥ इत्येवंचिंतयंतीसानगरद्वारमाप

सा ॥ जनाःसंकथयामासुःस्त्रीलास्तुसमागता ॥ ४२ ॥ श्रुत्वातुपितृपुत्रौतौपरांचिंतामवापतुः ॥ किंवदिष्यतिचाऽस्माकमस्मा-
भिर्वाकिमुच्यताम् ॥ ४३ ॥ एतस्मिन्नंतरेप्राप्तापुत्रपौत्रसमन्विता ॥ ज्येष्ठंदृष्ट्वातुतंबालंश्वशुरश्चपतिश्चसः ॥ ४४ ॥ आश्चर्यपरमं
प्रापपरांमुदमवापच ॥ त्वयाकिंपुण्यमाचीर्णंव्रतंवाऽपिशुचिस्मिते ॥ ४५ ॥ पतिव्रताऽसिधन्याऽसिपुण्यवत्यसिभामिनि ॥ मासु
हृयतुसंजातम कस्मान्नास्त्यभूतच्छिशुः ॥ ४६ ॥ सचत्वयापुनर्लब्धोवापीपूर्णाऽपिचाभवत् ॥ एकपुत्रागतेतस्त्वमागतासित्वया
न्विता ॥ ४७ ॥ त्वयोद्धृतंकुलंस्नुषेकिंत्वांस्तौमिशुभानने ॥ श्वशुरेणस्तुतैवंसापत्याप्रेम्णावचीक्षिता ॥ ४८ ॥ श्वश्र्वाचानंदितोवा
चपुण्यमार्यस्यसर्वशः ॥ प्रापुःसर्वेपिचानंदंभुक्त्वाभोगान्यथेप्सितान् ॥ ४९ ॥ इत्येतत्कथितंवत्सशीतलासप्तमीव्रतम् ॥ दध्यो-
दनंशीतलंचशीतलंकर्कटीफलं ॥ ५० ॥ वापीजलंशीतलंतुशीतलाश्चापिदेवताः ॥ तापत्रयस्यसंतापाच्छीतलाव्रतिनस्ततः ॥ ५१ ॥
अतोहेतोःसप्तमीयंशीतलेतियथार्थिका ॥ ५२ ॥ ॥ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येशीतलास-
प्तमीव्रतकथनंनामषोडशोऽध्यायः ॥ १६ ॥ ॥ ईश्वरउवाच ॥ ॥ अथवक्ष्यामिदेवेशपवित्रारोपणंशुभम् ॥ सप्तम्याम
मधिवास्याऽथअष्टम्यामर्पयेत्तुतत् ॥ १ ॥ पवित्रंकारयेद्यस्तुतस्यपुण्यफलंशृणु ॥ सर्वयज्ञव्रतंदानंसर्वतीर्थाभिषेचनम् ॥ २ ॥ प्राप्नु
यान्नाऽत्रसंदेहोयस्मात्सर्वगताशिवा ॥ नाधयोनचदुःखानिनपीडाव्याधयोपिच ॥ ३ ॥ नभयंशत्रुजंतस्यनग्रहैःपीड्यतेक्वचित् ॥

श्रा॰मा॰ २७ सिद्ध्यंतिसर्वकार्याणिअल्पानिचमहांतिच ॥ ४ ॥ नातःपरतरंवत्सअन्यत्पुण्यविवृद्धये ॥ नराणांचनृपाणांचस्त्रीणांचैवविशेषतः ॥ अ॰ १७
५ ॥ सौभाग्यजननंतातवत्सस्नेहात्प्रकाशितम् ॥ श्रावणेशुक्लसप्तम्यामधिवास्यविधानृज ॥ ६ ॥ सर्वोपस्करसंयुक्तोदेव्यांसद्भक्तिमा
न् स्थितः ॥ सर्वाणिपूजाद्रव्याणिगंधपुष्पफलानिच ॥ ७ ॥ नैवेद्यानिविचित्राणिवस्त्राद्याभरणानिच ॥ संपाद्यशोधयेद्देतान्प्राशयेत्सं
चगव्यकं ॥ ८ ॥ वरुणादिग्बलिंदद्यात्कार्यंचैवाधिवासनम् ॥ छादयेत्सदृशैर्वस्त्रैःपत्रैश्चैतत्पवित्रकम् ॥ ९ ॥ देव्यास्तन्मूलमंत्रेणश-
तवाराभिमंत्रितम् ॥ स्थापयेत्पुरतोदेव्याःसर्वशोभासमन्वितम् ॥ १० ॥ देव्यास्तुमंडपंकृत्वारात्रौजागरणंचरेत् ॥ नरनर्तकवेश्यानांकु
शलान्विविधान्गणान् ॥ ११ ॥ स्थापयेद्वाद्यगीतादीन्नृत्यविद्याविशारदान् ॥ प्रत्यूषेविधिवत्स्नात्वादिग्भ्योदद्यात्पुनर्बलीन् ॥ १२ ॥
देवींसंपूज्यविधिवत्स्त्रियोभोज्यास्तथाद्विजाः ॥ पवित्रमर्पयेद्देव्या आदावंतेचदक्षिणां ॥ १३ ॥ यथाशक्त्याभवेद्वत्सनियमःकार्यसा-
धकः ॥ स्त्रियोक्षामृगयामांसंराज्ञावर्ज्यंप्रयत्नतः ॥ १४ ॥ स्वाध्यायश्चद्विजाचार्यैर्नकार्यंकर्षणंकृषेः ॥ वणिग्भिर्नचवाणिज्यंसप्तपंच
दिनानिवा ॥ १५ ॥ अथवात्रीणिचैकंवादिनंतस्याऽर्द्धमेववा ॥ देव्याव्यापारआसक्तिःकर्तव्यासततंत्वदि ॥ १६ ॥ नकरोतिविधानेनप
वित्रारोपणंबुधः ॥ तस्यसांवत्सरीपूजानिष्फलामुनिसत्तम ॥ १७ ॥ तस्माद्भक्तिसमायुक्तैर्नरैर्देवीपरायणैः ॥ वर्षेवर्षेप्रकर्तव्यंपवि २७
त्रारोपणंशुभम् ॥ १८ ॥ कर्कटकगतेसूर्येतथासिंहगतेपिवा ॥ अष्टम्यांशुक्लपक्षस्यदद्याद्देव्याःपवित्रकम् ॥ १९ ॥ एतस्याऽकरणेदोषो

नित्यमेतत्प्रकीर्त्तितम् ॥२०॥ ॥सनत्कुमारउवाच॥ ॥देवदेवमहादेवपवित्रंयत्त्वयोदितम् ॥निर्मितव्यंकथंस्वामिंस्त
द्विधिंवद्सर्वशः॥२१॥ ॥ईश्वरउवाच॥ ॥हेमताम्रक्षौमरूप्यैःसूत्रैःकौशेयपट्टजैः॥कुशैःकाशैश्चकार्पासैर्ब्राह्म-
ण्यावर्त्तितैःशुभैः॥२२॥ कृत्वात्रिगुणितंसूत्रंत्रिगुणीकृत्यसाधयेत् ॥ततोत्तमंपवित्रंतुषष्ट्यासहशतैस्त्रिभिः॥२३॥समत्यासहि
तंद्वाभ्यांशताभ्यांमध्यमंस्मृतम् ॥साशीतिनाशतेनैवकनिष्ठंतत्समाचरेत् ॥ २४॥उत्तमंतुशतग्रंथिपंचाशद्ग्रंथिमध्यमम् ॥पवित्र
कंकनिष्ठंस्यात्सड्ग्रंथिभिश्चशोभनम् ॥२५॥अथवाऽगगुणैर्वेदद्वाभ्यांद्वादशतोपिवा ॥चतुर्विंशद्द्वादशाष्टग्रंथिभिर्वापवित्रकं॥२५
अथचाष्टोत्तरशतंचतुःपंचाशदेवताः॥सप्तविंशतिरेवैवज्येष्ठमध्यकनीयसम् ॥२६॥अधमंनाभिमात्रंस्यादूरुमात्रंतुमध्यमम् ॥
उत्तमंजानुमात्रंतत्स्मृतिमायांनिगद्यते ॥२७॥रंज्याःसर्वाःकुंकुमेनपवित्रग्रंथयःशुभाः॥देवींपूज्यपुरोभागेसर्वतोमंडलेशुभे ॥
२८॥कलशेवेणुपटलेपवित्राणिनिधापयेत् ॥त्रिसूत्र्यांब्रह्मविष्ण्वीशानावाह्यचततःशृणु ॥ २९॥नवसूत्र्यांतथोंकारं सोम-
वह्निंविधितथा॥नागांश्चंद्ररवीशांश्चविश्वेदेवांश्चस्थापयेत् ॥३०॥ अतःपरंप्रवक्ष्यामिस्थाप्याग्रंथिषुदेवताः॥क्रियाचपौरुषी
वीराविजयाचाऽपराजिता ॥ ३१॥ मनोन्मनीजयाभद्रामुक्तिरीशातथैवच ॥प्रणवादिनामोंतैश्चनामभिर्ग्रंथिसंख्यया ॥३२
॥आवर्त्यमानैरावाह्यपूजयेच्चंदनादिभिः॥ धूपितंप्रणवेनाऽभिमंत्र्यदेव्यैसमर्प्पयेत् ॥ ३३॥ एतत्तेकथितंदेव्याःपवित्रारोप

पांस्तुभम् ॥ अन्येषांचैवदेवानांप्रतिपत्प्रभृतिष्वपि ॥ ३४ ॥ पवित्रारोपणंकार्यंदेवतास्तावदामिते ॥ धनदःश्रीस्तथागौरीगणेशः
सोमराड्गुरुः ॥ ३५ ॥ भास्करश्चंडिकांबाचवासुकिश्चतथार्षयः ॥ चक्रपाणिर्ह्यनंतश्चशिवःकःपितरस्तथा ॥ ३६ ॥ प्रतिपत्प्रभृ
तिष्वेताःपूज्यास्तिथिषुदेवताः ॥ मुख्यायादेवतायास्तुपवित्रारोपणंत्विदम् ॥ ३७ ॥ तदंगदेवतायास्तुत्रिसूत्रंस्यात्पवित्रकं ॥ ३८ ॥
ईश्वरउवाच ॥ ॥ अतःपरंप्रवक्ष्यामिकर्तव्यंनवमीदिने ॥ श्रावणेमासिविप्रेंद्रपक्षयोरुभयोरपि ॥ ३९ ॥ कुमारीनामिका
दुर्गापूजनीयायथाविधि ॥ कुर्यान्नक्तव्रतंतत्रक्षीरमाक्षिकभोजनम् ॥ ४० ॥ उपवासपरोवास्यान्नवम्यांपक्षयोर्द्वयोः ॥ कुमारीत्वे-
तिनाम्नावैचंडिकामर्चयेत्सदा ॥ ४१ ॥ कृत्वारोप्यमयींभक्त्यादुर्गांवैपापनाशिनीम् ॥ करवीरस्यपुष्पैस्तुगंधैरगरुचंदनैः ॥ ४२ ॥
धूपेनचदशांगेनमोदकैश्चापिपूजयेत् ॥ कुमारींभोजयेत्पश्चात्स्त्रियोविप्रांश्चशक्तितः ॥ ४३ ॥ भुंजीतवाग्यतःपश्चाद्बिल्वपत्र-
कृताशनः ॥ एवंयःपूजयेद्दुर्गांश्रद्धयापरयायुतः ॥ ४४ ॥ सयातिपरमंस्थानंयत्रदेवोगुरुःस्थितः ॥ एतत्तेनवमीकृत्यंकथितंवि
धिनंदन ॥ ४५ ॥ सर्वपापप्रशमनंसर्वसंपत्करंनृणाम् ॥ पुत्रपौत्रादिजननमंतेसद्गतिदायकम् ॥ ४६ ॥ ॥ इतिश्रीस्कंदपुराणेस
नत्कुमारेश्वरसंवादेश्रावणमासमाहात्म्येऽष्टम्यांदेवीपवित्रारोपणंनामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ सनत्कुमारउवाच ॥
भगवन्पार्वतीनाथभक्तानुग्रहकारक ॥ कथयस्वदयासिंधोमाहात्म्यंदशमीतिथेः ॥ १ ॥ ॥ ईश्वरउवाच ॥ ॥ श्रावणे

शुक्लपक्षेतुदशम्यांप्रारभेद्व्रतम् ॥ प्रतिमासेदशम्यांतुशुक्लायांव्रतमाचरेत् ॥ २ ॥ एवंद्वादशमासेषुकृत्वाव्रतमनुत्तमम् ॥ नभःशुक्लद
शम्यांतुततउद्यापनंचरेत् ॥ ३ ॥ राज्याशयाराजपुत्रःकृष्यर्थंचकृषीवलः ॥ वाणिज्यार्थंवणिक्पुत्रःपुत्रार्थंगुर्विणीतथा ॥ ४ ॥ धर्मार्थ
कामसिद्ध्यर्थंलोकःकन्यावरार्थिनी ॥ यष्टुकामोद्विजवरोरोग्यारोग्यार्थमेवच ॥ ५ ॥ चिरप्रवसितेकांतेपत्नीतस्यागमायच ॥ एतेष्व-
न्येषुकर्तव्यमाशाव्रतमिदंतदा ॥ ६ ॥ यस्माद्यस्यभवेदार्तिःकार्यंतेनतदाव्रतम् ॥ नभःशुक्लदशम्यांतुस्नात्वासंपूज्यदेवताम् ॥ ७ ॥ नक्त
माशाःसंपूज्यावैपुष्पपल्लवचंदनैः ॥ गृहांगणेलेखयित्वायवपिष्टातकेनवा ॥ ८ ॥ स्त्रीरूपाश्चाधिदेवस्यशस्त्रवाहनचिन्हिताः ॥
दत्वाघृताक्तनैवेद्यंपृथक्दीपांश्चदापयेत् ॥ ९ ॥ फलानिकालजातानिततःकार्यंनिवेदयेत् ॥ आशाःस्वाशाःसदासंतुसिध्यंतुमेम-
नोरथाः ॥ १० ॥ भवतीनांप्रसादेनसदाकल्याणमस्त्विति ॥ एवंसंपूज्यविधिवद्दत्वाविप्रायदक्षिणाम् ॥ ११ ॥ अनेनक्रमयोगेनमासिमा
सिसदाचरेत् ॥ वर्षमेकंसुनिश्चेष्टततउद्यापनंचरेत् ॥ १२ ॥ सौवर्णाःकारयेदाशारोप्याःपिष्टातकेनवा ॥ ज्ञातिबंधुजनैःसार्द्धंस्ना-
तःसम्यगलंकृतः ॥ १३ ॥ पूजयेद्भक्तियुक्तेनचेतसादशदेवताः ॥ स्थापयेत्क्रमयोगेनमंत्रैरेभिर्गृहांगणे ॥ १४ ॥ त्वयिसन्निहितःशक्रः
सुरासुरनमस्कृतः ॥ स्वामीत्रिभुवनस्यास्यऐंद्रीदिग्देवतेनमः ॥ १५ ॥ अग्नेःपरिग्रहादाशेत्वमाग्नेयीतिपठ्यते ॥ तेजोरूपापराश-
क्तिरतस्त्वंवरदाभव ॥ १६ ॥ धर्मराजःसमाश्रित्यलोकान्संयमनस्त्वसौ ॥ तेनसंयमिनीत्वासियाम्येसत्कामदाभव ॥ १७ ॥ खड्गहस्ता

तिविक्रांतानिर्ऋतिस्थानमाश्रिता ॥ तेननिर्ऋतिरूपाऽसित्वमाशांपूरयस्वमे ॥ १८ ॥ त्वय्यास्तेभुवनाधारोवरुणोयादसांपतिः ॥ कार्या
र्थंममधर्मार्थंवारुणप्रणवाभव ॥ १९ ॥ अधिष्ठिताऽसियस्मात्त्वंवायुनाजगदादिना ॥ वायव्येत्वमतःशांतिंनित्यंयच्छममालये ॥ २० ॥ ध
नाधिपाधितिष्ठाऽसिप्ररव्यातात्वमिहोत्तरा ॥ निरुत्तराभवाऽस्माकंदत्वासद्योमनोरथम् ॥ २१ ॥ ऐशानिजगदीशेनशंभुनात्वमलंकृता ॥
पूरयस्वशुभेदेविवांछितानिनमोनमः ॥ २२ ॥ सर्वलोकोपरिगतासर्वदात्वंशिवप्रदा ॥ सनकाद्यैःपरिवृतामांत्राहिब्राह्मिसर्वदा ॥ २३ ॥ न-
क्षत्राणिचसर्वाणिग्रहास्तारागणास्तथा ॥ नक्षत्रमातरोयाश्चभूतप्रेतविनायकाः ॥ २४ ॥ पूजितास्थमयाभक्त्याभक्तिप्रवणचेतसा
सर्वेममेष्टसिद्ध्यर्थंभवंतुप्रवणाःसदा ॥ २५ ॥ भुजंगनकुलेनत्वंसेविताऽसियतोह्यधः ॥ नागांगनाभिःसहितातुष्टाभवममसाऽध्ववे ॥
२६ ॥ एभिर्मंत्रैःसमभ्यर्च्यपुष्पधूपादिनाततः ॥ अलंकारांश्चवासांसिफलानिचनिवेदयेत् ॥ २७ ॥ ततोवाद्यादिनादेनगीतनृत्यादिमंग-
लैः ॥ नृत्यतीभिर्वरस्त्रीभिर्जागरेणनिशांनयेत् ॥ २८ ॥ कुंकुमाक्षततांबूलदानमानादिभिःस्फरवम् ॥ अतिवाह्यचतांरात्रिंहर्षयुक्तेन-
चेतसा ॥ २९ ॥ प्रभातेप्रतिमाअर्च्यब्राह्मणायनिवेदयेत् ॥ अनेनविधिनाकृत्वाक्षमाप्यप्रणिपत्यच ३० ॥ भुंजीतमित्रैःसहितःसुहृद्बंधु
जनेनच ॥ एवंयःकुरुतेतातदशमीव्रतमादरात् ॥ ३१ ॥ सर्वान्कामानवाप्नोतिमनसोभिमतान्नरः ॥ स्त्रीभिर्विशेषतःकार्यंव्रतमेतत्स
नातनम् ॥ ३२ ॥ प्राणिवर्गेयतोनार्यःश्रद्धाकामपरायणाः ॥ धन्यंयशस्यमायुष्यंसर्वकामफलप्रदम् ३३ ॥ कथितंचमुनिश्रेष्ठमयाव्रत- २९

मि दंतव॥नाऽनेनसदृशंचान्यद्व्रतमस्तिजगत्त्रये॥३४॥येमानवाविधिजपुंगवकामकामाःसंपूजयंतिदशमीषुसदादशाशाः॥तेषा-
मशेषनिहितान्हृदयेऽतिकामानाशाफलंतिकिमिहास्तिबहूदितेन॥३५॥मोक्षप्रदानेनायासान्नाऽत्रकार्याविचारणा॥व्रतंचानेनस
दृशंनभूतंनभविष्यति॥३६॥ ॥इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येआशादशमीव्रतकथनंनामाष्टा
दशोऽध्यायः॥ १८॥ ॥ईश्वरउवाच॥ ॥अथवक्ष्येनभोमासिपक्षयोरुभयोरपि॥एकादश्यांतुयत्कृत्यंतच्छृणुष्वमहा
मुने॥१॥नकस्यचिन्मयाख्यातंगुह्यमेतदनुत्तमम्॥महापुण्यप्रदंवत्समहापातकनाशनम्॥२॥वांछितार्थप्रदंनृणांश्रुतंपापापहार-
कम्॥श्रेष्ठंव्रतानांसर्वेषांशुभमेकादशीव्रतम्॥३॥तत्तेऽहंसंप्रवक्ष्यामिसमाहितमनाःशृणु॥दशम्यांशुचिर्भिस्नात्वाकृतसंध्यादिकः
शुचिः॥४॥प्राप्याज्ञांवेदविदुषःपुराणज्ञान्जितेंद्रियान्॥संपूज्यदेवदेवेशंषोडशैरुपचारकैः॥५॥एकादश्यांनिराहारःस्थित्वाऽहमपे-
रेहनि॥भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाऽच्युत॥६॥कुर्याच्चनियमंवत्सगुरुदेवाग्निसंनिधौ॥तद्दिनेभूमिशायीस्यात्कामक्रोधविव
र्जितः॥७॥ततःप्रभातेविमलेकेशवार्पितमानसः॥श्रीधरेतितदावाक्यंक्षुतप्रस्खलनादिषु॥८॥पाखंडादिभिरालापंदर्शनंश्रवणं
तथा॥त्यजेद्दिनत्रयंवत्सव्रतवैकल्यकारकम्॥९॥ततोमध्यान्हसमयेनद्यादौविमलेजले॥स्नानंकुर्याज्जितक्रोधःपंचगव्यपुरःसरं॥१०॥
आदित्यायनमस्कृत्यश्रीधरंशरणंव्रजेत्॥स्ववर्णाचारविधिनाकृतकृत्योगृहंव्रजेत्॥११॥पूजयेच्छ्रीधरंतत्रश्रद्धाभक्तिपुरःसरम्॥

श्रा॰मा॰ ३०

पुष्पधूपैस्तथा दीपैर्नैवेद्यैर्विविधैरपि ॥१२॥ गीतवाद्यैः कथाभिश्च जागरं कारयेन्निशि ॥ कुंभं संस्थापयित्वा तु रत्नगर्भं सकांचनम् ॥१३॥ अ॰ ११
छादितं वस्त्रयुग्मेन सितचंदनचर्चितम् ॥ प्रतिमां देवदेवस्य शंखचक्रगदाभृताम् ॥१४॥ कृत्वा यथावत्संपूज्य प्रभाते विमले सति ॥ द्वा
दश्यां कृतकृत्यस्तु श्रीधरेति जपेद्बुधः ॥१५॥ पूजयेद्देवदेवेशं शंखचक्रगदाधरम् ॥ विप्राय दद्यात्कलशं हेमदक्षिणयान्वितम् ॥१६॥
विशेषान्नवनीतं तु तत्र देयं द्विजातये ॥ श्रीधरः प्रीयतां मेऽद्य श्रियं पुष्णात्वनुत्तमाम् ॥१७॥ इत्युच्चार्य मुनिश्रेष्ठ समभ्यर्च्य जगद्गुरुम् ॥ सं-
भोज्य विप्रमुख्यांश्च दद्याच्छक्त्या च दक्षिणाम् ॥१८॥ भृत्यादीन्भोजयित्वा तु यवसं गोषु दापयेत् ॥ स्वयं भुंजीत च ततः सुहृद्बंधुसमन्वि
तः ॥१९॥ सनत्कुमारकथितस्ते शुक्लैकादशीविधिः ॥ एवमेव नभोमासि कृष्णायामपि साधयेत् ॥२०॥ अनुष्ठानं तुल्यमेव देवनाम्नि परं
भिदा ॥ जनार्दनः प्रीयतां मे वाक्यमेतदुदीरयेत् ॥२१॥ शुक्लायां श्रीधरो देवः कृष्णायां तु जनार्दनः ॥ एतत्ते सम्यगाख्यातं शुभैकादशी
व्रतम् ॥२२॥ नानेन सदृशं पुण्यं न भूतं न भविष्यति ॥ इदं त्वया गोपनीयं न देयं दुष्टमानसे ॥२३॥ ॥ ईश्वर उवाच ॥ ॥ अथ व-
क्ष्यामि द्वादश्यां पवित्रारोपणं हरेः ॥ उक्तः प्रायो विधिर्देव्याः पवित्रारोपणे तव ॥२४॥ विशेषो यश्च तं वक्ष्ये सावधानमनाः शृणु ॥ अत्रा-
धिकारी संदिष्टस्तं शृणुष्व महामुने ॥२५॥ ब्राह्मणः क्षत्रियो वैश्यस्तथा स्त्री शूद्र एव च ॥ स्वधर्मावस्थिताः सर्वे भक्त्या कुर्युः पवित्रकम् ॥ ३०
२६॥ अतो देवेति मंत्रेण द्विजो विष्णोर्निवेदयेत् ॥ स्त्रीशूद्राणां नाममंत्रो येन संपूजयेद्धरिम् ॥२७॥ कद्रुद्रायेति मंत्रेण द्विजः शंभोर्निवेद

